श्લોકાર્થ

પ્રાતઃકાલીન સંધ્યાના રંગથી રક્ત બનેલું આકાશ જાણે, સેવકરૂપ બનેલા દેવોથી કુંકુમના પ્રવાહી વડે પૂજન કરાયું ન હોય ! તેવું શોભે છે. ॥૫૮॥

प्रातर्दिग्दन्तिनां गङ्गां व्रजतां जलकेलये ।
जज्ञे गण्डगलद्बिन्दुवृन्दैर्व्योमारुणं किमु ॥५९॥

व्योमाकाशमरुणं संध्योल्लसद्रागेण कृत्वा रक्तं जज्ञे जातम् । शोणीवमूवेत्यर्थः । उत्प्रेक्ष्यते--प्रातर्दिनमुखे जलकेलये सलिले क्रीडाकरणार्थं गङ्गामम्वरजम्बालिनीं प्रति व्रजतां गच्छतां दिग्दन्तिनां हरित्कुञ्जराणां गण्डेभ्यः कपोलपालिभ्यो गुलद्भिर्मनि सरद्भिः बिन्दुवृन्दैः पद्मनामभिः शोणच्छविमदवारिकणगणैः । 'बिन्दुजालं पुनः पद्मम्' इति हैम्याम् । पश्चम्यादिदशायां करिणां कपोलेभ्यो रक्तबिन्दवो निःसरन्तीति कविसमयः 'भूर्जत्वचः कुञ्जरबिन्दुशोणाः' इति कुमारसंभवे ॥

શ્લોકાર્થ

પ્રાતઃકાલીન સંધ્યાના રંગથી આકાશ લાલ બની ગયું; તે જાણે પ્રભાતમાં જલક્રીડા કરવા માટે આકાશ ગંગા તરફ જતા દિગ્ગજોના ગંડસ્થલમાંથી ટપકતા મદ જલનાં બિંદુસમુહથી લાલ બની ગયું ન હોય ! ॥૫૯॥

प्रत्यूषे मखभुग्लेखातल्पेभ्यः पतयालुभिः ।
किमास्तीर्णारुणाम्भोजपर्णैः शोणीकृतं नभः ॥६०॥

नभो गगनं शोणीकृतम् अधिकारार्थात्प्रभातसंध्यारागेण पाटलं प्रणीतम् । उत्प्रेक्ष्यते-प्रत्यूषे दिनवदने मखभुजां यज्ञांशभोजिनां लेखा श्रेणी तस्यास्तल्पेभ्यः पल्यङ्केभ्यः पतयालुभिः पतनशीलैरास्तीर्णैः प्रस्तृते अरुणाम्भोजानां कोकनदानां पर्णैर्दलैर्मण्डलैरिव । इति प्रातःसंध्या ॥

શ્લોકાર્થ

જાણે પ્રભાતમાં દેવોની શય્યામાથી પડતાં લાલ કમલોનાં પાંદડાઓથી આકાશ વ્યાપ્ત બની ગયું ન હોય ! તેવું આકાશ લાલ બન્યું ॥૬૦॥

अथो पाथोजिनीनाथोऽभ्युदियाय नभोङ्गणे ।
कपोलकुङ्कुमक्लिन्नं प्राच्याः किं कर्णकुण्डलम् ॥६१॥

अथो संध्यारागानन्तरं नभोङ्गणे आकाशाजिरे पाथोजिनीनां जलजन्मिनीनां नाथः प्राणपतिः सूर्यः अभ्युदियाय उदयाचलशृङ्गयामुद्गमं लभते स्म । उत्प्रेक्ष्यते–कपोलस्य गण्डस्थलस्य पत्रवल्लीं प्रापितेन कुङ्कुमेन घुसृणेन क्लिन्नं व्याप्तम् । 'अयमुदयति घुसृणारुणतरुणीवदनोपमश्चन्द्रः' इति विदग्धमुखमण्डनवचनात् प्राच्या आखण्डलमहिष्याः पूर्वदिशः कर्णस्यैकं कुण्डलं स्फुटं प्रकटं ताटङ्क इव ॥

શ્લોકાર્થ

ત્યારપછી આકાશરૂપ આંગણામાં સૂર્યનો ઉદય થયો. તે જાણે ! કુંકુમના વિલેપનથી વ્યાપ્ત ગાલવાળી પૂર્વદિશારૂપી સ્ત્રીનાં કાનનું એક દેદીપ્યમાન કુંડલ, ન હોય ! ॥૬૧॥

पूषद्विषं प्रसाद्याम्भोमूर्तिं नित्यानुशीलनैः ।
पद्मिनीभिरभीर्भर्ता पूषाहूतः किमुद्ययौ ॥६२॥

पूषा भानुमान् उदयौ उदयमालिङ्गति स्म । उत्प्रेक्ष्यते पद्मिनीभिः कमलिनीभिः प्रेयसीभिर्भर्ता स्वप्राणनाथः । अथ वा पद्मिनीभिररविन्दैर्बान्धवैः सुहृद्भिर्वा निजसुहृद्बन्धुराहूतः । सप्रणयं तादृशस्य पूषद्विषः शंकरस्य नित्यमहर्निशमनुशीलनैः सर्वावसरसावधानताविधानार्हतसेवाभिः । जलमूर्तिरीश्वरस्य यदुक्तम्–'क्षितिजलपवन हुताशनयजमानाकाशसोमसूर्याख्याः । यस्य खलु मूर्तयोऽष्टौ स भवतु भवतां शिवः सिद्धैः ॥' इति कविसमयोक्तिः । प्रसाद्य पूर्वं प्रसन्नीकृत्याभयदानमार्गणसन्मानप्रदानादि सम्यग्वरोपादानपूर्वं संतोष्य ॥

શ્લોકાર્થ

સૂર્યનો ઉદય થયો ! જાણે કમલિનીઓએ નિરંતર ખૂબ ભક્તિથી જલમૂર્તિ ઇશ્વરને પ્રસન્ન કરીને પોતાના પતિ સૂર્યને પોતાની પાસે બોલાવ્યો ન હોય ! તેમ સૂર્યનો ઉદય થયો ॥૬૨॥

अभ्रभूवल्लभेनेवोत्खातः प्रातर्निखेलता ।
प्राग्गिरेर्गैरिको गण्डोपलो बालारुणो व्यभात् ॥६३॥

बालारुणोऽर्भकभानुमाली व्यभाद्विभासते स्म । 'जरीजृम्भद्बिम्बद्युमणिविलस–' इति खण्डप्रशस्तौ । तथा 'विश्वस्यापि तमो हिनस्ति तरुणिर्वालोऽपि कल्पाङ्कुरो दारिद्र्याणि गजावली हरिशिशुः' इति श्रीचिन्तामणिपार्श्वनाथस्तुतौ । उत्प्रेक्ष्यते प्रातः प्रभातसमये निखेलता स्वतन्त्रं तटाघातादिक्रीडां कुर्वता अभ्रमूवल्लभेन अभ्रमूनामा हस्तिनी तस्या भर्त्रा । अभ्रमूशब्दो दीर्घोऽपि दृश्यते यथा 'गजानामभ्रमूपतिः' इति काव्यकल्पलतायाम् । तथा 'अभ्रमूवल्लभारूढं निशारोषे कदाचन । स्वप्ने महेन्द्रमद्राक्षीत्पृथा पृथुमनोरथा ॥' इति पाण्डवचरित्रेऽपि । ऐरावणवारणेन प्राग्गिरेः पूर्वपर्वतस्य गैरिको धातुमयो गण्डोपलः स्थूलपाषाण इवोत्खातः उत्पाद्य क्षिप्तः इव । ऐरावतदन्तावलस्य पूर्वस्या दिशो दिग्गजत्वात्प्राग्गिरेरिति कथनं युक्तिमत् ॥

### શ્લોકાર્થ

જાણે પ્રભાત સમયે સ્વેચ્છાપૂર્વક ક્રીડા કરતા ઐરાવણ હાથીએ ઉખાડી નાંખેલા પૂર્વાચલ પર્વતનો લાલમાટીનો સ્થૂલ પાષણનો ટુકડો ન હોય, તેવો બાલસૂર્ય શોભે છે. ॥૬૩॥

द्यावाभूमी पराभूष्णुं भूच्छायामरवैरिणम् ।
भेत्तुं व्यमोची चण्डांशु चक्रं किं चक्रपाणिना ॥६४॥

चक्रपाणिना नारायणेन । उत्प्रेक्ष्यते चण्डास्तीक्ष्णा रुद्रा वा अंशवः किरणा यस्य सूर्यरूप वा । अथ वा चण्डं भयकारि अंशु शीघ्रगामि । 'अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ' इत्यनेकार्थः । शीघ्रगामिनि वाच्यलिङ्गः । शेषेऽपि तत्र क्लीबम् । चक्रं सुदर्शनं नाम स्वरथाङ्गं व्यमोचि मुक्तमिव । किं कर्तुम् । द्यावाभूम्योर्दिवस्पृथिव्योर्नभोभुवोः पराभूष्णुमभिभवनशीलं भूच्छायमन्धकारमेवामरवैरिणं दानवं भेत्तुं विदारयितुं हन्तुम् ॥

### શ્લોકાર્થ

આકાશ અને પૃથ્વીનો પરાભવ કરતા અંધકારરૂપી દૈત્યનો નાશ કરવા માટે વિષ્ણુએ જાણે પ્રચંડ કિરણોવાળું સુદર્શનચક્ર છોડયું ન હોય ! તેવો સૂર્ય શોભે છે, ॥૬૪॥

कण्ठपीठीलुठत्प्राणरथाङ्गाह्वविहायसाम् ।
जीवातुर्यमुनीवीजी व्यरचीव विरञ्चिना ॥६५॥

विरञ्चिना ब्रह्मणा यमुनायाः कालिन्द्या बीजी जनकः । 'वप्ता तु जनकस्तातो बीजी जनयिता पिता' इति हैम्याम् । 'सहस्ररश्मिर्यमुनाकृतान्तजनकः प्रद्योतनस्तापनः' तथा 'यमुना यमभगिनी कालिन्दी सूर्यजा यमी' इति द्वितयमपि हैम्याम् । उत्प्रेक्ष्यते जीवातुर्जीवनौषधमिव व्यरचि विहितम् । केषां कण्ठपीठ्यां गलकन्दले । जयत्युदरनिःसरद्वरसराजपीठीपठच्चतुर्मुखमुखावलीरचितसामनामस्तुतिः' इति चम्पूकथायाम् । 'वंशिकवक्रोष्ठिककान्यकुब्जपीठानि' इति लिङ्गानुशासने स्त्रीक्लीबलिङ्गयोः । पीठं पीठी च । लुठन्तः वियोगातिव्यथाव्याकुलतया निर्गमनायागच्छन्तः प्राणा असवो येषाम् । कण्ठगतजीवितानामित्यर्थः । तादृशानां रथाङ्ग इति आह्वा नाम येषाम् । 'चक्रवाको रथाङ्गाह्वः कोको द्वन्द्वचरोऽपि च' इति हैम्यां रथाङ्गशब्देन चक्रमुच्यते तन्नाम्नां विहायसां पक्षिणां चक्रवाकविहङ्गमानां जीवनस्य भेषजमिव । 'विहायो व्योमपक्षिणोः' इत्यनेकार्थः ॥ इति सूर्योदयः ॥

श्लोकार्थ

वियोगनी व्यथाथी व्याकुल बनवाथी जेना प्राण कंठे आवी गया छे तेवा चक्रवाक नामना पक्षीओ माटे ब्रह्माए जाणे कालिन्दी पिता सूर्यरूप जीवन औषध बनाव्युं न होय । ॥६५॥

शोणी दीप्तिर्दिनेशस्याधात्कुमारितरा श्रियम् ।
कोकैर्दुःखानलज्वाला किमुद्गीर्णाः सुहृत्पुरः ॥६६॥

दिनेशस्य दिवसनायकस्य भानोः दीप्तिः कान्तिः श्रियं शोभामधाद्धरते स्म । किंभूता । कुमारितरा बाला । प्रथमोत्पन्ना । अतिशयेन कुमारी कुमारितरा । 'ह्रस्वो वा' इति सारस्वतसूत्रेण तरतमयोः परयोः सतोर्वा ह्रस्वः । अत एव किंभूता । शोणी अत्यन्तारुणा । 'रचयति रुचिं शोणीमेतां कुमारितरा रवेः' इति नैषधे । उत्प्रेक्ष्यते कोकैश्चक्रवाकैर्विहंगमैः सुहृदः स्वमित्रस्य भास्करस्य पुरोऽग्रे दुःखरूपानलस्य सकलशर्वरीपरस्परवियोगसजातासाततीव्रज्वलनज्वाला इवोद्गीर्णाः हृदयवदनाद्बहिरुद्धान्ता इव ॥

श्लोकार्थ

सूर्यनी लालकान्ति नवप्रसूता बालिकानी जेम शोभा धारण करे छे. ते जाणे चक्रवाकोए पोताना मित्रनी आगळ विरहानलनी प्रचंड ज्वाला प्रगट करी न होय । ॥६६॥

निजानुरागिणीर्वीक्ष्य दारान्स्मेरसरोजिनीः ।
किमुद्गीर्णोऽरुणज्योतीरागो राजीवबन्धुना ॥६७॥

राजीवबन्धुना अरविन्दसुहृदा सूर्येण अरुणमतिरक्तं यज्ज्योतिः कान्तिः एव रागो हृदयोदयदनुरागोऽनुरतिरुद्गीर्णः प्रकटीभूतः । किं कृत्वा । स्मेरा विकसितानन्तसरोजाः सरोजिनीः पद्मिनीर्दारान् निजप्रेयसी । निजे आत्मनि विषयेऽनुरागोऽस्त्यासामित्यनुरागिण्यस्ताः सानुरागा वीक्ष्य व्यालोक्य ॥

श्लोकार्थः

વિકસિત કમલિનીને પોતાની તરફ અનુરાગિણી જોઇને સૂર્યે જાણે અત્યંત લાલ કાન્તિરૂપ પોતાનો અનુરાગ પ્રગટ કર્યો ન હોય ! ॥૬૭॥

हरिव्यापादितध्वान्तकुम्भिकुम्भसमुद्भवैः ।
रक्तै रक्तीकृता शङ्के प्रभा भाति स्म भानवी ॥६८॥

भानोरियं भानवी सूर्यसंबन्धिनी प्रभा अर्थात्कुमारीकान्तिर्भाति स्म शुशुभे । तत्राहमेवं शङ्के वितर्कयामि । हरिणा भानुना केसरिणा च व्यापादिता कराग्रनिशितनिशिखोद्धुरधाराविदारिता ध्वान्ता अन्धकारा एव कुम्भिनः श्यामवर्णत्वादन्धकारसाधारणा वारणाः । यत उक्तम् 'दूरतया स्थूलतया श्यामतया गन्धलोलुपैर्मधुपैः । धावितमिभराजधिया तदवधिया चाग्रतो महिषः ॥' इति । प्रायोऽधुना कृष्णवर्ण एव दन्तिनो दृश्यन्ते । तेषां कुम्भेभ्यः शिरःपिण्डेभ्य उद्भव उत्पत्तिर्येषां तादृशै रक्तै रुधिरै रक्तीकृता शोणा निर्मितेव ॥

श्लोकार्थ

સૂર્યની લાલ કાન્તિથી આકાશ શોભે છે. જાણે મને લાગે છે કે સૂર્યરૂપી સિંહના તીક્ષ્ણ કિરણોરૂપ નખોથી વિદારણ કરાયેલા અંધકારરૂપી હાથીઓનાં કુંભસ્થલમાંથી નીકળતા રૂધિરવડે જાણે લાલ બન્યું ન હોય ! (દૂરતા, સ્થૂલતા, અને શ્યામતાથી સમાન હોવાથી મદજલનાં લોલુપી ભ્રમરો હાથી સમજીને પાડા તરફ દોડે છે. આ કારણે અંધકારને આપેલી હાથીની ઉપમા યુક્તિયુક્ત છે.) ॥૬૮॥

कान्तागमे धृताताम्राम्बरा इव दिगङ्गनाः ।
बन्धूकबन्धुरैर्भ्रभ्रमवैर्भान्ति प्रभाभरैः ॥६९॥

बन्धूकवद्बन्धूककुसुमानीव 'विपोहरिया' इति लोकप्रसिद्धानि । बन्धुरैः शोणिम्ना सुन्दरैः अम्नादूमानोर्भैवैरुत्पन्नैः प्रभाभरैः कान्तिकलापैर्दिगङ्गना आशावशा भान्ति विराजन्ते । उत्प्रेक्ष्यन्ते कान्तस्य स्वभर्तुः सूर्यस्यागमे समागमनसमये । 'दिशो हरिद्भिर्हरितामिवेश्वरः इति रघुवशे । धृतानि परिहितान्यातांम्राणि सामस्त्येन शोणान्यम्बराणि वासांसि याभिः प्रतादर्श्य इव ॥ इत्यरुणतरुणप्रभा ॥

## श्लोकार्थ

બંધુક નામનાં લાલ પુષ્પોની જેમ મનોહર સૂર્યની લાલ કાન્તિનાં સમુહથી પૂર્વ દિશારૂપી સ્ત્રી શોભે છે. તે જાણે પોતાના પતિ સૂર્યના સમાગમ માટે ધારણ કરેલાં લાલ વસ્ત્રો ન હોય ! ॥૬૯॥

द्रुमद्रोणिषु संचिन्वन्नुल्लसन्पल्लवानिव ।
तन्वन्निव तटाकेषु निन्दन्कोकनदश्रियम् ॥७०॥

कुर्वन्निव गिरेः श्रृङ्गे गैरिकावनिविभ्रमम् ।
ताम्बूलश्रियमास्येषु दिग्वधूनां दिशन्निव ॥७१॥

सीमन्तेषु मृगाक्षीणां सिन्दूरं पूरयन्निव ।
प्रातः प्रस्तारयन्माति भानुमान्मानुविभ्रमम् ॥७२॥

भानुमान् किरणमाली सूर्यः प्रातः वासरवदने भानूनां निजांशुकप्रभाणां विभ्रमं शोभां विलासं वा प्रस्तारयन् विस्तारयन् भाति विभ्राजते । द्रुमाणां तरूणां द्रोणिषु । 'द्रोणी द्रोणिरिदन्तः श्रेण्यामपि' इत्यनेकार्थविचूर्णिः । भानुविभ्रम विस्तारयन्निति सर्वत्र योज्यते । उत्प्रेक्ष्यते–उल्लसतः स्फुरतः विकसतो वा पल्लवान्प्रवालान्संचिन्वन्नुपचयबाहुल्य प्रापयन्निव । तथा तटाकेषु पद्माकरेषु । उत्प्रेक्ष्य कोकनदानां रक्तोत्पलाना श्रियं लक्ष्मीं तन्वन्विस्तारयन्निव बहूनि कोकनदानि कुर्वन्निव । तथा । गिरेः पर्वतस्य श्रृङ्गे शिखरे । उत्प्रेक्ष्यते–गैरिकावने रक्तधातुभूमेर्विभ्रमं भ्रान्तिं कुर्वन्निव विरचयन्निव । पुनर्दिग्वधूनां दशदिगङ्गनानां आस्येसु वदनेषु । उत्प्रेक्ष्यते ताम्बूलश्रियं दिशन्ददान इव । ताम्बूले चर्विते चाधरादौ रक्तिमा भवेत् । पुनर्मृगाक्षीणां ञस्तसारङ्गीदृशां सीमन्तेषु केशपाशवर्त्मसु उत्प्रेक्ष्यते सिन्दूरं श्रृङ्गारभूषणं पूरयन् सिन्दूरेण भरन्निव इति लोहितलक्ष्मीविलसित सिद्धान्ते । 'कुङ्कुमखवियच्च जीवलोपे' इति सूर्यस्याभ्युदयसमये कान्तिरप्यतीव रक्ता स्यादिति । त्रिभिर्विशेषकम् ॥ इति सूर्यप्रभाप्रस्तारः ॥

શ્લોકાર્થ

પ્રભાત સમયે સૂર્ય પોતાના કરણોને વિસ્તારતો શોભે છે, તે જાણે વૃક્ષોની પંક્તિઓમાં વિકસ્વર પલ્લવોનો સંચય કરતો ન હોય ! સરોવરમાં વિકસ્વર લાલ કમલોની શોભા વિસ્તારતો ન હોય ! પર્વતોના શિખરોમાં લાલ ધાતુમય પૃથ્વીને કરતો ન હોય ! દિગાંગનાઓના મુખોમા તાંબૂલની શોભાને આપતો ન હોય ! મૃગનયનાં સ્ત્રીઓનાં સેંથામાં સિંદૂર પૂરતો ન હોય ! આવા સૂર્યનો ઉદય થયો. ॥૭૦॥ ॥૭૧॥ ॥૭૨॥

प्रारेमे भानुना व्योम्नि क्रमाच्चङ्क्रमणक्रमः ।
विश्वविश्वंभराभोगं प्रेक्षितुं किमु काङ्क्षता ॥७३॥

भानुना मार्तण्डेन व्योम्नि गगनाङ्गणे क्रमादनुक्रमेण चङ्क्रमणक्रमः गमनस्यानुक्रमः परिपाटी चङ्क्रमणकलितः क्रमः प्रारेमे पादाः प्रारेभिरे । अथ वा चङ्क्रमस्य क्रम आनन्तर्यनिरन्तरत्वं विश्रामरहितत्वेन गन्तुं प्रारमतेत्यर्थः । 'क्रमः कल्पाङ्घ्रिशक्तिषु परिपाट्याम्' इत्यनेकार्थः । 'परम्परायां पादक्षेपे आनन्तर्ये पदसंधावपि क्रमः' इत्यनेकार्थावचूरिः । उत्प्रेक्ष्यते विश्वस्य जगतः अथ वा विश्वस्याः समग्रायाः विश्वंभरायाः वसुंधरायाः, आभोगं विस्तारं प्रेक्षितुं द्रष्टुं काङ्क्षता किमु वाञ्छतेव ॥ इति दिनोदयः ॥

શ્લોકાર્થ

અનુક્રમે સૂર્યે આકાશમાં ચાલવાનો પ્રારંભ કર્યો તે જાણે જગતની પૃથ્વીનો વિસ્તાર જોવાની તેની ઈચ્છા ન હોય ! ॥૭૩॥

आसाद्य दर्शनं तस्याः शासनस्वर्गिसुभ्रुवः ।
व्यरंसीद्ध्यानतः सूरिर्योगीव परमात्मनः ॥७४॥

सूरिर्हीरविजयसूरीन्द्रो ध्यानतः सूरिमन्त्रजापतः प्रणिधानाद्व्यरंसीद्विरमते स्म । किं कृत्वा । तस्याः पूर्वोक्तसर्वाङ्गवर्णनागमनादिव्यतिकरायाः शासनदेवतायाः दर्शनं प्रत्यक्षावलोकनमासाद्य अधिगत्य । साक्षात्समीक्ष्येत्यर्थः । क इव । योगीव । यथा योगसाधको जितेन्द्रियो ध्यानविधानैकतानः परमात्मनः परमात्मस्वरूपस्य दर्शनं प्राप्य विरमति । ध्यानं कुर्वाणा योगीन्द्रा हृदि परमात्मनमालोक्य ध्यानाद्विरमन्ते । यथा 'योगं स चान्तः परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम' इति कुमारसंभवे ।

सूरीन्दुर्वसतेर्मध्येध्यानस्थानादथागमत् ।
प्राग्गिरेः कन्दरक्रोडाद्भास्वानिव नभोङ्गणम् ॥७५॥

अथ शासनदेवतागमनप्रश्नकथनध्यानविरमणानन्तरं सूरीन्दुर्हीरविजयसूरिचन्द्रो ध्यानस्थानात्प्रणिधानविधानास्पदाद्वसतेरुपाश्रयस्य मध्ये उत्सङ्गे आगमदागतः । क इव। भास्वानिव । भानुमाली यथा प्राग्गिरेः प्राचीनपर्वतस्य कन्दरस्य । कन्दरशब्दस्त्रिलिङ्गः। 'पिठरप्रतिसरपात्रकन्दराः' इति लिङ्गानुशासने । क्रोडात् हृदयात् । मध्यादित्यर्थः । अथ वा क्रोडादुत्सङ्गान्नभोङ्गणं गगनाजिरे समागच्छति ।

શ્લોકાર્થ

જેમ સૂર્ય પૂર્વાચલની ગુફાનાં મધ્યભાગમાંથી ગગનાંગણમાં આવે તેમ હીરવિજય-સૂરિચન્દ્ર ધ્યાનભૂમિ–સમાધિસ્થાનમાંથી ઉપાશ્રયની મધ્યમાં પધાર્યા. ॥૭૫॥

प्रीतिप्रह्वैः प्रभुस्तत्र परिवव्रे व्रतिव्रजैः ।
सुनासीर इवास्थानीमासीनः स्वर्गिणां गणैः ॥७६॥

तत्र मौलोपाश्रये प्रभुः सूरीश्वरः प्रीत्या प्रमोदेन गुरुशिष्यस्नेहेन धर्मस्य हार्देन प्रह्वैर्नम्रीभूतैः पदाम्भोजे भ्रमरीभावं प्राप्तैर्व्रतिव्रजैः श्रमणपुङ्गवगणैः परिवव्रे परिवृतः । क इव । सुनासीर इव । यथा आस्थानीं सुधर्माभिधानां सभामासीन आश्रित्य तिष्ठन् । उपविष्ट इत्यर्थः । सहस्रलोचनः स्वर्गिणां गीर्वाणानां गणैर्वृन्दैः परिव्रियते ॥

શ્લોકાર્થ:

જેમ સુધર્મા સભામાં રહેલો ઈન્દ્ર દેવોના સમુહથી શોભે તેમ ઉપાશ્રયમાં ભક્તિ-ભાવથી નમ્ર બનેલા સાધુઓનાં સમુહથી હીરવિજયસૂરિજી શોભતા હતા. ॥૭૬॥

तत्रागमन्पत्तनादिसंघास्तं वन्दितुं तदा ।
स्वर्गादिदेवाः समवसरणस्थं यथा जिनम् ॥७७॥

तत्र डीसाभिधे नगरे पत्तनमणहिल्लपुरमेदनमादिर्येषां तेषां नगराणां संघा श्राद्धगणास्तं ध्यानोत्थित सूरिं वन्दितु नमस्कर्तुमागमन्नागच्छन्ति स्म । यथा इवार्थे । के इव । देवा इव । यथा स्वर्गो देवलोक आदिः प्रथमं येषां तेषां भवननगरज्योतिर्विमानानां देवा भवनपतिवानमन्तरज्योतिष्कद्वादशकल्पवासिनः सुराः समवसरणे तिष्ठतीति समवसरस्थस्तं जिन तीर्थकरं नमसितुमायान्ति ॥

શ્લોકાર્થ

જેમ ભવનપતિ, વ્યંતર, જ્યોતિષી અને વૈમાનિક એ ચારે નિકાયના દેવો સમવસરણમાં બિરાજમાન શ્રીજિનેશ્વર ભગવંતને વંદન કરવા માટે આવે તેમ ડીસા નગરમાં બિરાજમાન શ્રીહીરવિજયસૂરિજીને અણહિલ્લપુર પાટણ આદિ નગરોના સંઘો વંદનાર્થે આવ્યા. ॥૭૭॥

प्रबोधयन्सुदृक्पद्मान्कुदृक्पङ्कांश्च शोषयन् ।
स्पर्धयेव रवेः सूरेः प्रतापो व्यानशे दिशः ॥७८॥

सूरेर्हीरविजयवाचंयमेन्दोः प्रतापो दिशो दशापि हरितः प्रति व्यानशे व्याप्नोति स्म । उत्प्रेक्ष्यते रवेः सूर्यस्यार्थान्मार्तण्डचण्डप्रतापस्य स्पर्धया संघर्षेण मनस्यसूयया वा । किं कुर्वन् । सुदृशः सम्यक् दृष्टय एव पद्माः कमलानि प्रबोधयन् प्रतिबोधबन्धुरान् विदधत् । सुदर्शनिनः कुर्वन् । सूर्योऽपि पद्मानि प्रबोधयति विकाशयति । च पुनः किं कुर्वन् । कुत्सिताः शाक्यादिमतोपादानपटलसंवलिता दृशः दृष्टयो येषां सिद्धान्तविरुद्धवादित्वाद्दुष्टा दृष्टयो येषां ते कुदृशः कुवादिनः कुमतान्येव पङ्काः कर्दमास्तान् शोषयन् । सूर्योऽपि पङ्कं शोषयति ॥

શ્લોકાર્થ

સમ્યગ્ દ્રષ્ટિ જીવોરૂપ કમલોને પ્રતિબોધ કરતો અને બૌદ્ધાદિ કુવાદિઓરૂપ કાદવનું શોષણ કરતો સૂરિવરનો પ્રતાપ જાણે સૂર્ય સાથે સ્પર્ધા કરતો ન હોય ! તેમ દશ દિશાઓમાં ફેલાયો. ॥૭૮॥

प्रतिक्रम्य चतुर्मासी स क्रमाद्व्यहरत्ततः ।
हर्षाद्वर्षा इवोल्लङ्घ्य मानसादिष्टमानसः ॥७९॥

स सूरिः क्रमादनुक्रमेण विजयदशमीदीपालिकादिनगमनपरिपाट्या चतुर्णां मासानां समाहारश्चतुर्मासी वार्षिकचतुर्मासिकम् । अथ वा वर्षा शरल्लक्षणयोर्द्वाभ्यां मासाभ्यां कृत्वा चतुर्मासी, तां प्रतिक्रम्य । एतावता कार्तिकचतुर्मासिकप्रतिक्रमण प्रणीय चतुर्मासीं पूर्णीकृत्य वा ततस्तस्माड्डीसानगराद्व्यहरत् विहारं कृतवान् । इत्यर्थः । क इव । इष्टमानस इव । यथा इष्टमानसो राजहसः वर्षा वर्षासमयमुल्लङ्घ्य मानसात् स्वावासकासारतः हर्षादानन्दाद्विहरति पृथिवीपीठपानीयप्रपूर्णानेकपङ्कजनिकुञ्जमञ्जुलजलाशयेषु स्वैरं विहरति । 'नृपमानसमिष्टमानसः' इति नैषधे ॥

### શ્લોકાર્થ

જેમ રાજહંસ વર્ષા સમયનું ઉલ્લંઘન કરીને પોતાના નિવાસસ્થાન માનસરોવરથી નિકળીને કમલોના કુંજોથી મનોહર પૃથ્વીપર રહેલાં જલાશયોમાં હર્ષ પૂર્વક વિહરે છે તેમ સૂરિવરે અનુક્રમે ચાતુર્માસિક પ્રતિક્રમણ કરીને ડીસા નગરથી વિહાર કર્યો. ॥૭૯॥

क्रमेणाहम्मदावादपुरे सूरिः समीयिवान् ।
नभोनीरधिवर्णिन्याः प्रतीरे सुप्रतीकवत् ॥८०॥

सूरिर्हीरगुरुः क्रमेण ग्रामानुग्रामादिविहारपरिपाट्या अहम्मदावाद इति नाम यस्य तादृशे पुरे नगरे समीयिवान् समाजगाम । किंवत् । सुप्रतीकवत् । यथा ईशानविदिक्संबन्धी अष्टमः सुप्रतीकनामा ककुप्कुञ्जरः नभस आकाशस्य नीरधेर्जलराशेर्वर्णिनी पत्नी । 'वशा सीमन्तिनी वामा वर्णिनी महीलावला' तथा 'कर्ष्वुर्द्वीपवती समुद्रदयिता धुन्यौ स्रवन्ती सरः' इति द्वितयमपि हैम्याम् । एतावता आकाशगङ्गा । 'नदत्याकाशगङ्गायाः स्रोतस्युद्दाममदिग्गजे' इति रघुवंशे । तस्याः प्रतीरे तटे । 'तट तीरं प्रतीरं च' इति हैम्याम् ॥

### શ્લોકાર્થ

જેમ ઈશાનદિશાનો દિગ્ગજ આકાશગંગાના તીરે આવે તેમ સૂરિવર ગ્રામાનુગ્રામ વિહાર કરતા અનુક્રમે **અહમદાબાદ** નામના નગરમાં પધાર્યા. ॥૮૦॥

देवीनिगदितागण्यभाग्यसौभाग्यशालिनः ।
स्वस्यान्तेवासिनस्तस्य कम्माङ्गजयतीशितुः ॥८१॥

सूरीन्दुः कामयांचक्रे दातुं सूरिपदं ततः ।
तनूजस्येव राज्यस्य धुरं धात्री पुरंदरः ॥८२॥ (युग्मम्)

ततोऽहम्मदावादगमनानन्तरं सूरिर्हीरविजयरजनिजानिः स्वस्यात्मनः आत्मीयस्य धान्तेवासिनः समीपे वसनशीलस्य शिष्यस्य कम्मानाम्नो व्यवहारिणः गृहीतव्रतत्वात्साधोर्वा अङ्गजः पुत्रः तथा यतीनां मध्ये ईशिता मुख्यो गीतार्थत्वात् । अथ वा भाविनि भूतोपचारात् निर्ग्रन्थानां नायकः तस्य विमलप्रज्ञांशस्य सूरिपदमाचार्यपदं प्रदातुं कामायांचक्रे अभिलषति स्म । किंभूतस्य । देव्या शासनतरुण्या निगदिते सूचिते कथिते अनण्ये अप्रमेये वाङ्मानसगोचरीकर्तुमशक्ये भाग्यं पुण्यं तथा सौभाग्यं सुभगता विश्ववाल्लभ्यं ताभ्यां शालते शोभते इत्येवंशीलस्य । क इव । धात्रीपुरंदर इव । यथा

पृथिवीपुरहूतो राजा तनूजस्य निजनन्दनस्य राज्यस्य स्वसकलमण्डलाधिपत्यधुर प्रदातुं कामयते ॥

श्लोकार्थ

જેમ રાજા પોતાના પુત્રને રાજ્યની ધુરા અર્પણ કરવાની અભિલાષા કરે તેમ આચાર્યદેવ શાસનદેવીએ જેના અગણિત ભાગ્ય સૌભાગ્યની પ્રશંસા કરી છે તેવા પોતાના અંતેવાસી કમાઋષીના પુત્ર **જયવિમલ** નામનાં મુનિને આચાર્યપદ આપવાની અભિલાષાવાળા બન્યા. ॥૮૧॥ ॥૮૨॥

प्रक्रमे तत्र तत्रत्यसंघेनागृह्यत प्रभुः ।
तमिवाभिनवं सूरिशक्रमन्यं दिदृक्षता ॥८३॥

तत्र प्रक्रमे तस्मिन्प्रस्तावे तत्रत्येण कमीपुरीवेण संघेन श्राद्धवर्गेण भगवानगृह्यत । अर्थात्सूरिपदप्रदानार्थं प्रभोराग्रहः कृतः । संघेन किं कर्तुमिच्छता । तमिव हीरविजयगणधरमिव अन्यमपरं अभिनवं सूरिशक्र गणभारधुरंधरं दिदृक्षता द्रष्टुमिच्छता ॥

श्लोकार्थ

નૂતન સૂરીન્દ્રને જોવા ઈચ્છતા કમીપુરના સંઘે સૂરિપદ પ્રદાનના મહોત્સવને માટે સૂરિવરને અત્યંત આગ્રહ કર્યો. ॥૮૩॥

ततः स्वाशयसंवादि प्रपेदे तद्वचः प्रभुः ।
व्रतव्यतिकरे लौकान्तिकदेवोक्तमाप्तवत् ॥८४॥

ततः संघाग्रहानन्तरं प्रभुर्हीरविजयसूरिः स्वस्यात्मन आशयमभिप्रायं संवदत्यनुकरोत्येवंशीलं यादृशं गुरुचित्ते तादृश एव संघाग्रह इत्यर्थः । तद्वचः संघवचनं प्रपेदे प्रतिपन्नवान । किंवत् । आप्तवत् । यथा जिनेन्द्रः व्रतव्यतिकरे दीक्षाग्रहणावसरे लोकस्य पञ्चमकल्पस्य अन्त. प्रान्तोऽवसान तत्र तमिस्रराजिकान्तरालस्थःलिविमानेषु । अर्चि–अर्चिमालि–वैरोचन–प्रभंकर चन्द्राभ–सूर्याभ शुकाभ– सुप्रतिष्ठाभ अरिष्टाभिधानेषु भवा लौकान्तिकाः । ते च नवविधा । यथा सारस्वत आदित्य–वह्नि वरुण गर्दतो–तुषित–अव्याबाध–आग्नेय–अरिष्टनामानो देवास्तेषामुक्त कथितमिवाङ्गीकृतवान् ॥

श्लोकार्थ

દીક્ષા ગ્રહણ કરવાના અવસરે જેમ જિનેશ્વર ભગવત નવ લોકાંતિક દેવોએ

કહેલાં વચનોને અંગીકાર કરે છે તેમ સૂરિભગવંતે પોતાના અભિપ્રાયને અનુસરવાવાળા સંઘના વચનને સ્વીકાર્યું. ॥૮૪॥

सूरीन्द्रेणाथ दैवज्ञैर्मुहूर्तं निरधार्यत ।
एतन्महोदयस्येव प्रारम्भप्रथमक्षणः ॥८५॥

अथ संघाग्रहाङ्गीकारानन्तरं सूरीन्द्रेण दैवज्ञैर्मौहूर्तिकैः सार्धं मुहूर्तं दोषादिनिर्मुक्तशुभवासरवेलालग्नं निरधार्यत निश्चीयते स्म । उत्प्रेक्ष्यते एतस्य जयविमलप्रज्ञांशस्य यो महोदयो महानभ्युदयः तस्य प्रारम्भस्य प्रथम आद्यः क्षणः अवसरः कालविशेषः पञ्चदशलवलक्षणः ॥

શ્લોકાર્થ

સંઘનાં વચનને અંગીકાર કર્યા બાદ સૂરીન્દ્રે જ્યોતિષીઓની સાથે શુભમુહૂર્તનો નિર્ણય કર્યો. તે જાણે આ જયવિમલમુનિના ભાગ્યોદયની પ્રથમક્ષણ (પંદર લવરૂપ) ન હોય ! ॥૮૫॥

शिल्पिभिः कारितः संघैर्मण्डपो यन्मुनीशितुः ।
पट्टश्रियं वरीतुं किं स्वयंवरणमण्डपः ॥८६॥

संघैः कमीपुरश्राद्धसमुदायैः कर्तृभिः शिल्पिभिर्विज्ञानिकैरद्भुतचकचातुर्यैः कृत्वा साधनभूतैर्मण्डपो बहुजनाश्रयः कारितो निर्मापितः । उत्प्रेक्ष्यते—जयविमलनाम्नो मुनीशितुर्निग्रन्थनाथस्य पट्टश्रियं वरीतुं सूरिपदलक्ष्मीमुद्वोढुं स्वीकर्तुं किं स्वयंवरणमण्डपः ॥

શ્લોકાર્થ

કમીપુરમાં શ્રાવકોએ શિલ્પીઓ પાસે મંડપની રચના કરાવી. તે જાણે જયવિમલ મુનીશ્વરના પટ્ટલક્ષ્મી સાથેના વિવાહ માટેનો સ્વયંવરમંડપ ન હોય ! ॥૮૬॥

एतद्व्यतिकरेऽनेककौतुकालोकलालसा ।
त्रिलोकी चित्रदम्भेन मण्डपे किमुपेयुषी ॥८७॥

एष चासौ व्यतिकरश्च एतद्व्यतिकर आचार्यपदप्रदानावसरस्तस्मिन्ननेकानि कौतुकानि आश्चर्याणि तेषामालोकने लालसा उत्सुका त्रिलोकी भुवनत्रयी चित्राणामालेख्यभावं

लम्भितानामाश्चर्यैरसुरनागराणां दम्भेन कपटेन कृत्वा । उत्प्रेक्ष्यते तत्र मण्डपे किमुपेयुषी आगतेव ॥

श्लोकार्थ

આચાર્યપદ પ્રદાનના મહોત્સવ પ્રસંગે, અનેક આશ્ચર્યો જોવા માટે ઉત્સુક બનેલા ત્રણે લોક જાણે ચિત્રનાં બહાને મંડપમાં આવીને રહ્યા ન હોય ! ॥૮૭॥

विस्तीर्णोऽपि स संकीर्णो बभूवानेकनागरैः ।
भाविभट्टारकागण्यपुण्याकृष्टैरिवागतैः ॥८८॥

स संघजननिर्मापितो विस्तीर्णोऽप्यतिविपुलोऽपि सन् मण्डपो जनाश्रयः अनेकैर्गणनातीतैर्नागरैर्जनपदग्रामसंनिवेशपुरनगरजननिवहैः संकीर्णः अतिलघीयः स्थानमिव बभूव संजातः । किंभूतैर्नागरैः । आगतैः समेतैः दशदिगन्तादपि तत्रोपेतैः । उत्प्रेक्ष्यते भाविनो भविष्यतो भट्टारकस्य जयविमलसूरेरगण्यैः सुरनरादिभिरपि जेतुमशक्यैः पुण्यैर्भागधेयैराकृष्टैर्वारिकावद्धानीतैरिव उपायातैः ॥

श्लोकार्थ

સંઘે બનાવેલો મંડપ અતિ વિશાળ હોવા છતાં પણ દશે દિશાથી આવેલા નાગરિકજનો વડે નાનો—સંકીર્ણ બની ગયો, તે નાગરિકો જાણે ભાવી આચાર્યશ્રીજયવિમલસૂરિનાં અગણિત પુણ્યથી આકર્ષાઈને આવ્યા ન હોય ! ॥૮૮॥

निशि तारैरिवाकाशो भ्रियमाणः स निर्भरम् ।
तन्महोमिलितै रेजे पौरैर्जानपदैर्जनैः ॥८९॥

तस्य जयविमलप्रज्ञांशस्य पट्टप्रदानस्य महसि उत्सवे मिलितैरितस्तत आगत्यैकीभूतैः । उत्सववाची महःशब्दः सकारान्तोऽप्यस्ति । यथा 'एनं महस्विनमुपैहि सदारुगोत्रैः' इति नैषधे । नलानलयोर्वर्णने । 'महस्विनं तेजस्विनमनलमुत्सववन्तं च' इति तद्वृत्तिः । तथा 'महस्तेजस्युत्सवे च' इत्यनेकार्थः । पौरैर्नागरैर्जानपदैर्गूर्जरपाञ्चाललाटसौराष्ट्राद्यनेकनीवृज्जन्मभिर्जनैर्लोकैः निर्भरं निचितं नीरन्ध्रं भ्रियमाणः पूर्यमाणः स मण्डपो भाति स्म । कैरिव । यथा निशि तमिस्रायां रात्रौ तारकैरुपलक्षणात्त्रिखिलज्योतिः सत्तानैर्भ्रियमाण आकाशो गगनं भाति । चन्द्रोद्योते च केचिद्दृश्यन्ते, केचिन्न । तमिस्रायां दर्शयामिन्यां तु सर्वेऽपि स्फुटा एव लक्ष्यन्ते, तस्मादत्र तमिस्रा रात्रिरेवोपादीयते नापरा ॥

શ્લોકાર્થ

જેમ રાત્રિમાં તારાગણોથી આકાશ શોભે છે તેમ આચાર્યપદ પ્રદાનના મહોત્સવમાં ગૂર્જર, પંચાલ, લાટ, સૌરાષ્ટ્ર આદિ દેશો અને પાટણ, અમદાવાદ આદિ શહેરોમાંથી આવેલા હજારો નાગરિકોથી વ્યાપ્ત બનેલો મંડપ શોભે છે. ! ॥૮૯॥

તીર્થેશિતેવ સમવસરણં શ્રમણાગ્રણીઃ ।
શ્રમણશ્રેણિભિઃ સાર્ધમધ્યાસામાસ મણ્ડપમ્ ॥૯૦॥

શ્રમણાનાં તત્સમયવર્તિનાં સંવિગ્નપક્ષિણાં શુદ્ધાચારવતાં ચ શ્રમણાનાં સાધૂનામગ્રણી- ર્મુખ્યો હીરવિજયસૂરિઃ શ્રમણશ્રેણિભિઃ મુનિમણ્ડલીભિઃ સાર્ધં મણ્ડપમાચાર્યપદપ્રદાન- સ્થાનમધ્યાસામાસ । क इव । તીર્થેશિતેવ । યથા તીર્થનાથઃ સાધુભિઃ સાર્ધં સમવસરણં ધર્મદેશનમન્દિરમધ્યાસ્તે । કેનાપિ મહર્ધિકેન દેવેન દાનવેન વા રચિતમિતિ શેષઃ ॥

શ્લોકાર્થ

જેમ તીર્થંકર ભગવંત સાધુઓ સાથે દેવદાનવરચિત સમવસરણભૂમિને શોભાવે તેમ સંવિગ્નપાક્ષિક અર્થાત્ શુદ્ધ આચારવાળા સાધુઓની સાથે શ્રમણનેતા આચાર્યદેવે મંડપને શોભાવ્યો. અર્થાત્ મંડપમાં પધાર્યા. ॥૯૦॥

પણ્ડિતાખણ્ડલં શ્રીમજ્જયાદ્યવિમલાભિધમ્ ।
આહ્વાતું પ્રેષયામાસ મુનિમુખ્યાન્મુનીશ્વરઃ ॥૯૧॥

મુનીશ્વરો હીરભટ્ટારકઃ । જયેતિ પદમાદ્યં યસ્યાસ્તાદૃશી વિમલેત્યભિધા નામ યસ્ય સ જયવિમલસ્તમેવ પણ્ડિતેષુ કોવિદેષુ આખણ્ડલ ઇવાખણ્ડલ ઇન્દ્રસ્તમાહ્વાતુમાકારયિતું મુનિમુખ્યાન્વાચકાદિવાચંયમપુંગવાન્ પ્રેષયામાસ પ્રહીણોતિ સ્મ ॥

શ્લોકાર્થ

મુનીશ્વર આચાર્યદેવે પંડિતોમાં ઇન્દ્ર સમાન જયવિમલમુનિને બોલાવવા માટે મુખ્ય મુખ્ય સાધુઓને મોકલ્યા. ॥૯૧॥

અયમાનીયતામીભિર્મણ્ડપં પણ્ડિતાગ્રણીઃ ।
ઉત્તરાહૈર્ગન્ધવાહૈરમ્બુવાહોઽમ્બરાઙ્કવત્ ॥૯૨॥

अमीभिर्मुनिमुख्यैरयं जयविमलनामा पण्डिताग्रणीः कोविदकुञ्जरः मण्डपं जनाश्रयमानीयत आनीतः । कैरिव । गन्धवाहैरिव । यथा उत्तरस्यां भवैरुत्तराहैः समीरणैः । लोके 'स्तरवाय' इति प्रसिद्धेः । अम्बुवाहो जलभरनिर्भरभृतमध्यो धाराधरः अम्बरस्याकाशस्याङ्कमुत्सङ्गमानीयत ॥

श्लोकार्थ

જેમ ઉત્તરદિશાનો પવન આકાશમાં મેઘને લાવે તેમ મુખ્ય મુનિવરો વિદ્વદ્ શિરોમણિ એવા જયવિમલમુનિને મંડપમાં લઈ આવ્યા. ॥૯૨॥

प्रभुं बभाज तैः सार्धं साधुभिः साधुसिन्धुरः ।
युवराज इवानल्पैः सामन्तैः पितरं निजम् ॥९३॥

स साधुसिन्धुरः जयविमलमुनीन्द्रः तैः सूरिप्रहितैर्मुनिपञ्चाननैः सार्धं प्रभुं हीरविजयसूरीश्वरं बभाज आगत्य प्रणम्य सेवते स्म । क इव । युवराज इव । यथा सकलजनपदप्रजाचिन्ताकारकतया स्थापितो नृपकुमारः अनल्पैर्बहुभिः सामन्तैः सीमालभूपालैरनेकमण्डलीकमहीपालैर्वा समं निजं पितरं जनकं सेवते ॥

श्लोकार्थ

જેમ યુવરાજ ઘણા સામંતો સાથે આવીને પોતાના પિતા રાજાને પ્રણામ કરે તેમ મુનિપુંગવ જયવિમલમુનિએ સાધુઓની સાથે આવીને ગુરૂદેવને નમસ્કાર કર્યા ॥૯૩॥

भाविसूरेरभूत्तस्योपाध्यायपदमादितः ।
[1]परमावधिवत्साधोरुदेष्यत्केवलश्रियः ॥९४॥

भविष्यतीत्येवशीलो भावी स चासौ सूरिश्च तस्य भविष्यदाचार्यस्य आदितः प्रथमं तस्य जयविमलविदुषः उपाध्यायनाम पदमभूदभूव । एतावता आचार्यपदादादावुपाध्यायपदं प्रदत्तमित्यर्थः । किंभूतम् । परमावधिवत् । यथा उदेष्यन्ती प्रकटीभविष्यन्ती केवलश्रीः केवलज्ञानलक्ष्मीर्यस्य तादृशस्य साधोः श्रमणस्य परममुत्कृष्टं पृथक्परमाणुज्ञानकृल्लोकमानमलोकेऽप्यपि लोकप्रमितासंख्येयखण्डाववोधविधायकमवधिज्ञानं भवति । अथ वा प्रादुर्भविष्यत्केवलमेकाकारं निखिललोकाकाशप्रकाशकं ज्ञानं यस्य तादृग्विधस्य जिनेशितुः तीर्थकरस्य आदितः संयमग्रहणप्रथमसमय एव तूर्यं चतुर्थं मनःपर्यायसंज्ञं ज्ञानं भवति इति द्वितीयपाठः ॥

१. 'उदेष्यत्केवलस्येव तुर्यं ज्ञानं जिनेशितुः' इति पाठान्तरम् ।

શ્લોકાર્થ

જેમ કેવલજ્ઞાનીને કૈવલ્યલક્ષ્મી પ્રાપ્ત થતાં પહેલાં અલોકમાં લોક પ્રમાણ અસંખ્ય ખંડુકોને જાણવારૂપ પરમાવધિજ્ઞાન પ્રાપ્ત થાય અથવા જિનેશ્વરને સંયમગ્રહણના પ્રથમ સમયે ચોથું 'મન:પર્યવ જ્ઞાન' ઉત્પન્ન થાય તેમ ભાવી આચાર્ય જયવિમલમુનિને પ્રથમ **વાચકપદ-ઉપાધ્યાયપદ** અર્પણ કરવામાં આવ્યું. ॥૯૪॥

महामहैस्ततस्तस्य सूरिः सूरिपदं ददौ ।
[1]जातवेदाः स्फुरज्ज्योतिर्निकेतनमणेरिव ॥९५॥

तत उपाध्यायपदप्रदानानन्तरं सूरिर्हीरविजयप्रभुः महामहैरधिकजायमानोत्सवैस्तस्य जयविमलोपाध्यायस्य सूरिपदमाचार्यपदं ददौ । क इव । जातवेदा इव । यथा जातवेदाः कृशानुर्निकेतनमणेर्दीपस्य स्फुरद्देदीप्यमानं ज्योतिस्तेजो दत्ते । अथ वा । क इव । यथा स्नेहप्रियो दीपस्य दशेन्धनस्य तमोपहं मूर्च्छायमिदुरं निजमात्मीयं ज्योतिर्महो वितारयति ॥

શ્લોકાર્થ

જેમ અગ્નિ દીપકને દેદીપ્યમાન જ્યોતિ અર્પે તેમ હીરવિજયસૂરિજીએ જયવિમલ ઉપાધ્યાયને મહામહોત્સવપૂર્વક આચાર્યપદ અર્પણ કર્યું. ॥૯૫॥

उज्झित्वा शमिनोऽशेषान्सुरानिव रमा हरिम् ।
तं सूरिमुपगच्छन्ती रेजे सूरिपदेन्दिरा ॥९६॥

तं नवं प्रत्यग्रं जयविमलनामानं सूरिमुपगच्छन्ती समायान्ती सूरिपदेन्दिरा आचार्यपदलक्ष्मी रेजे विराजते स्म । किं कृत्वा । उपगच्छन्ती अशेषान् समस्तान् तदभिलाषुकान् परान् शमिनो वाचकप्रज्ञांशप्रमुखान् मुनीनुज्झित्वा संत्यज्य । केव । रमेव । यथा समग्रान् सुरासुरानोज्झ्य हरिं नारायणमुपयान्ती मन्दरमन्थानकमथनसमये क्षीरपाथोधिपाथोवेलासमुत्थितसर्वाङ्गीणलक्ष्मीसमुल्लसल्लक्ष्मी राजते । किंच 'देवेन श्रुतममृतमथनावसरे सुरासुरकरपरिवर्त्यमानमन्दरमन्थानकनिर्घोषबधिरितसमस्तरोदःकन्दरादिवापि दूरोच्छलितदुग्धतुषारासारतारकितनभस समुत्पन्नानेककौस्तुभादिवस्तुविस्तारादुद्गच्छदप्सरसां मुखमण्डलैः क्षणमिव विहितविकचनलिनशोभादनेकाश्चर्यकुक्षेः क्षीरसागरात्

[1] प्रदीप इव दीपस्य निजज्योतिस्तमोपहम्' इति पाठान्तरम् ।

अजनि जनितजगद्विस्मया स्मरजननी हस्तस्थिततरुणारविन्दा देवी देदीप्यमाना पुण्यलक्ष्मीर्यस्याः सर्वाङ्गलावण्यमर्घुं विकचलोचनकचैरापीय पीयूषभुजोमदनमदपरवशाः परस्परमवेर्ष्यन्तश्चकुश्चक्रपाणिना समं समरम् । अथ सर्वानप्यन्तरान्तरापततरतानुल्लङ्घ्यच मन्दरगिरिशिखरशातकुम्भनिकषोपलायमानवाहोर्भगवतश्चिक्षेप । क्षेपीयः कण्ठे वैकुण्ठस्य स्वयंवरकुसुममालिकाम्' इति चम्पूकथायाम् ॥

શ્લોકાર્થ

દેવદાનવોએ મેરૂપર્વતને રવૈયો કરીને ક્ષીરસમુદ્રનું મંથન કરેલું, તેમાંથી કૌસ્તુભ, ઐરાવણ, લક્ષ્મી, અપ્સરાઓ વગેરે જગતને વિસ્મયકારી અનેક વસ્તુઓ પ્રગટ થઇ. તેમાંથી જેમ લક્ષ્મીદેવી સર્વે દેવોનો ત્યાગ કરીને વિષ્ણુને વરી તેમ વાચક આદિ સમસ્ત સાધુઓનો ત્યાગ કરીને સૂરિપદવી એક જયવિમલસૂરીને વરી ॥૯૬॥

तस्य पूरयतो विश्वकामांश्चिन्तामणेरिव ।
श्रीमद्विजयसेनेति सूरिराजोऽभिधां व्यधात् ॥९७॥

सूरिराजो हीरविजयसूरीन्द्रस्तस्य जयविमलसूरेः श्रीमान् विजयसेन इत्यभिधां नाम व्यधाच्चकार । तस्य किं कुर्वतः । विश्वेषां जगज्जनानां कामान्मनोभिलषितान् पूरयतः पूर्णान् सृजतः । कस्येव । चिन्तामणेरिव । यथा देवमणिः सर्वान्कामान् संपूरयति ॥

શ્લોકાર્થ

જગતના જીવોના મનોરથોને ચિંતામણી રત્નની જેમ પૂર્ણ કરતા સૂરિરાજે (હીરવિજયસૂરીન્દ્રે) જયવિમલમુનિનું 'શ્રીમદ્‌વિજયસેનસૂરિ' એવું નામ રાખ્યું. ॥૯૭॥

किंनर्य इव नागर्यो जगुर्गीतिं पिकीक्वणाः ।
संगीत तेनिरे नाकिकुमारा इव नर्तकाः ॥९८॥

नागर्यो नागराङ्गनाः किंनर्यः किंपुरुषयोषित इव गीतिं गानं जगुर्गायन्ति स्म । किंभूताः । पिकीनां कोकिलानामिव क्वणः पञ्चमसूचकालापनमधुरध्वनिर्यासां तथा नर्तका नटा नाकिनां देवानां कुमारा इव सगीतं प्रेक्षणकनिमित्तप्रयुक्तगीतनृत्यवाद्यत्रयम् । अथ वा प्रेक्षणकं नाटकमेव तत्तेनिरे चक्रिरे ॥

શ્લોકાર્થ

તે અવસરે કિન્નરીઓની જેમ કોકીલકંઠ જેવા મધુર સ્વરવાળી નગરની સ્રીઓએ ગીત ગાયા, અને દેવકુમારોની જેમ નૃત્યકારોએ નાટક કર્યું. ॥૯૮॥

त्रिलोकीमपि कुर्वाणं तत्र चित्रीकृतामिव ।
नेत्रश्रोत्रसुधास्यन्दि तौर्यत्रिकमजायत ॥९९॥

तत्र व्यतिकरे नेत्राणां लोचनानां श्रोत्राणां श्रवणानां च मध्ये सुधाममृतरसं स्पन्दते क्षरति सिञ्चतीत्येवंशीलं तादृशं तौर्यत्रिकं गीतनृत्यवाद्यत्रयमजायत जातम् । किं कुर्वाणम् । त्रिलोकीं विश्वत्रयीमपि चित्रीकृतामालेख्यलिखितामिव कुर्वाणं विदधानम् ॥

श्लोकार्थ

ત્યાં ત્રણે લોકને ચિત્રવત્ સ્તબ્ધ કરતું અને નેત્ર તથા શ્રોત્રમાં અમૃતનું સિંચન કરનારૂં ગીત, નૃત્ય અને વાજિંત્રનુ ત્રિક થયું. ॥૯૯॥

तत्रास्ति श्राद्धमूर्धन्यः श्राद्धो मूलाभिधः सुधीः ।
सौन्दर्यधर्मदार्ढ्याभ्यां कामदेव इवापरः ॥१००॥

तत्राहम्मदावादनाम्नि राजनगरे श्राद्धेषु श्रीमत्तया पक्षश्रावकवर्गेषु मूर्धन्यः शेखरः श्राद्ध आस्तिकः मूल इत्यभिधा नाम यस्य मूलकश्रेष्ठिनामा सोऽस्ति विद्यते । किंभूतः । सु शोभना जिनधर्मानुगामिनी दानादिधर्मेषु धीर्बुद्धिर्यस्य सः । उत्प्रेक्ष्यते सौन्दर्येण वपुःश्रैयरूपकेण तथा धर्मेण पुण्यकृत्येषु दृढाशयतया च अपरोऽन्यः कामदेव इव । शरीररमणीयतया अपरः कन्दर्पदेव एकः सुस्मरो विद्यते । अपरस्त्वयं तत्तुल्यत्वेन तथा धर्मकर्तव्यदार्ढ्येन महावीरभगवतः द्वितीयश्रावकः कामदेवनामा यादृशोऽभूत्तादृगेवायमप्यास्ते ॥

श्लोकार्थ

અમદાવાદમાં શ્રાવકોમાં શ્રેષ્ઠ એવા 'મૂલચંદ' નામનાં આસ્તિક શ્રેષ્ઠિ હતા તે શ્રેષ્ઠિ શરીરનાં સૌંદર્યથી જાણે બીજા કામદેવ અને પુણ્ય કાર્યોમા દ્રઢતાની દ્રષ્ટિએ જાણે ભગવાન મહાવીરના શ્રાવક બીજા કામદેવ ન હોય ! તેવા હતા. ॥૧૦૦॥

जृम्भकव्रजवज्जन्मोत्सवे शंभोर्वणिग्वरः ।
ववर्ष वसुधाराभिस्तस्य सूरिपदक्षणे ॥१०१॥

वणिग्वरः समयनैगमग्रणीेऽग्रणीः मूलाख्यश्रेष्ठीतस्य विजयसेनसूरेराचार्यस्य यत्पदं तस्य क्षणे प्रदानस्य महोत्सवे वसुधाराभिः सुवर्णरूप्यमाणकश्रेणिभिर्ववर्ष वर्षति स्म ।

सुवर्णरूप्यकमहमुन्दिनाणकैः प्रभावनां कृतवानित्यर्थः । किंवत् । जृम्भकव्रजवत् । यथा शंभोस्तीर्थंकरस्य जिनेन्द्रस्य जन्मोत्सवे जननमहामहे सौधर्मेन्द्रादिष्टधनदलोकपालानुज्ञया वैश्रवणसेवकतिर्यग्जृम्भकगीर्वाणगणो हिरण्यस्वर्णरजतरत्नवस्त्रवासचूर्णपुष्पफलादिवृष्टिं कुर्वन्ति ॥

શ્લોકાર્થ

શંભુના (જિનેશ્વર ભગવંતના) જન્મમહોત્સવમાં જેમ તિર્યગ્જૃંભકદેવો (સૌધર્મેન્દ્રના આદેશથી ધનદ કુબેર ભંડારીના સેવકો) સોનું, રૂપુ, રત્નો, વસ્ત્રો, પુષ્પો અને ફળો વગેરેની વૃષ્ટિ કરે છે તેમ સૂરિપદના મહોત્સવ પ્રસંગે મૂલચંદ શ્રેષ્ઠીએ સોના રૂપા ને માણેકની વૃષ્ટિ કરી અર્થાત્ પ્રભાવના કરી. ॥૧૦૧॥

तस्मिन्विनिहितं सूरिपदं सूरिसितांशुना ।
दिदीपे भास्वता ज्योतिरिव सायं धनंजये ॥१०२॥

तस्मिन्विजयसेनाभिधाने व्रतीन्द्रे सूरिसितांशुना हीरविजयसूरिसुधामरीचिना सूरेराचार्यस्य पदं विनिहितं स्थापितं सद्दिदीपे दीप्यते स्म । किमिव । ज्योतिरिव । यथा भास्वता दिवाकरेण सायं संध्यासमये धनंजये वैश्वानरे विनिहितं ज्योतिर्नक्तमतीव दीप्यते । वासरे तादृशी दीप्तिर्न भवति यादृशी निशायां दीप्रा दीप्तिर्भवति । प्रसिद्धं चैतत् । किं चास्तं व्रजन्नम्भोजिनीवल्लभो धूमध्वजे स्वतेजोऽवस्थाप्य गच्छति प्रातरागतश्च गृह्णातीति कविसमयः । तथा रघुवंशे 'दिनान्ते निहितं तेजः सवित्रेव हुताशनेः' इति ॥

શ્લોકાર્થ

જેમ સંધ્યા સમયે સૂર્યે અગ્નિમાં મૂકેલી જ્યોતિ દીપે છે તેમ હીરવિજયસૂરિરૂપી ચન્દ્ર વડે શ્રી વિજયસેનસૂરિમા સ્થાપના કરાયેલી આચાર્યપદવી શોભવા લાગી. ॥૧૦૨॥

शोभामुभौ लभेते स्म श्रीमत्सूरिपुरंदरौ ।
प्रणिघ्नन्तौ तमःस्तोमं सूर्याचन्द्रमसाविव ॥१०३॥

श्रीमन्तौ गणनायकैश्वर्यलक्ष्मीकलितौ यशःशोभाभास्वरौ सूरिपुरंदरौ हीरविजयसेनाभिधाचार्यबिडौजसौ उभौ द्वावपि शोभां कीर्तिं ख्यातिं लभेते स्म आसादयामासतुः । किंभूतौ । तमसामज्ञानानां दुरितानां वा स्तोमं समूहं प्रणिघ्नन्तौ व्यापादयन्तौ । काविव । सूर्याचन्द्रमसाविव । यथा दिवाकरनिशाकरौ तमःस्तोममन्धकारनिकरं मूलादुच्छिन्दतौ शोभां भुवने प्रसिद्धिं लभेते ॥

શ્લોકાર્થ

અજ્ઞાનરૂપી અંધકારના સમુહનો નાશકરનારા સૂર્ય, ચંદ્રની જેમ ગણ નાયકત્વના ઐશ્વર્યથી શોભતા હીરવિજયસૂરિ અને વિજયસેનસૂરિ આ બે સૂરિન્દ્રોએ કીર્તિ શોભા પ્રાપ્ત કરી. ॥૧૦૩॥

वनीमिवावनी सूरिशक्रौ चङ्क्रमणैः क्रमात् ।
मधुराधाविव मासौ शोभां लम्भयतः स्म तौ ॥१०४॥

तौ हीरविजयविजयसेननामानौ सूरिशक्रौ आचार्यपर्जन्यौ क्रमादनुक्रमेण चङ्क्रमणै-र्विहरणैः विहारक्रमेण अवनीं मेदिनीमण्डलं शोभां श्रियं लम्भयतः स्म प्रापयामासतुः । काविव । मधुराधाविव । यथा मधुश्चैत्रः, तथा राधो वैशाखः । 'चैत्रे मधुश्चैत्रकश्च वैशाखे राधमाधवौ' इति हैम्याम् । एतावता वसन्तर्तुसंबन्धिनौ चैत्रवैशाखमासौ क्रमादनुक्रमतः प्रथमं चैत्रः पत्रपुष्पमञ्जरीकलिकाफलोदयोन्मुखान्कुरुते । ततो वैशाखमासः परिणतफल-मण्डलकलितान् सालमण्डलान् विदधाति इत्यनुक्रमः । चङ्क्रमणैर्निजागमनैः कृत्वा वनीमुद्यानवीथीं वनमालां लम्भयतः । 'स्ववनीसंप्रवदत्पिकापि का' ॥ इति ध्यानोत्था-नाकमिपुरागमनाचार्यपदस्थापनम् ॥

શ્લોકાર્થ

જેવી રીતે ચૈત્ર અને વૈશાખ (વસંતઋતુ) પૃથ્વીને શોભાવે છે તેવી રીતે બે સૂરીન્દ્રોએ ક્રમશ: વિહાર કરીને અવનીને શોભાયમાન કરી. (ચૈત્રમાસ પ્રથમ પુષ્પ, પત્ર, મંજરી આદિ વડે વનને નવપલ્લવિત કરે છે. ત્યારબાદ વૈશાખમાસ પાકેલા ફલોની પંક્તિ વડે વૃક્ષોને શોભાવે છે.) ॥૧૦૪॥

कोऽपि मेधाविमूर्धन्यो लुम्पाकानां मते तदा ।
मेघजी ऋषिरित्यास्ते नाम्नामेध्ये मणिर्यथा ॥१०५॥

तदा तस्मिन्नवसरे लुम्पाकानां 'लउका' इति नाम्ना प्रसिद्धानां मते पक्षे मेघजी इति नाम्ना कोऽपि कश्चिदृषिः तन्मतवेषधारकः आस्ते विद्यते । किंभूतः । मेधाविनां बुद्धिमतां पण्डितानां वा मध्ये मूर्धन्यो मुकुटायमानः प्रज्ञालचूडामणिः । क इव । मणिरिव । यथा इवार्थे । यथा अमेध्ये अशुचिस्थाने रत्नं मणिर्भवति ॥

શ્લોકાર્થ:

જેમ અશુચિ સ્થાનમાં રત્ન હોય તેમ તે અવસરે લુંપાક (લોંકા) મતમાં પંડિતોમાં

શિરોમણિ એવા મેઘજી નામના ઋષિ હતા. ॥૧૦૫॥

ऋषिः कुअरजीनामा तं लुम्पाकमतप्रभुः ।
पल्लीपतिर्यथा वङ्कचूलं निजपदे व्यधात् ॥१०६॥

लुम्पाकानां मतस्य प्रभुः स्वामी मारवाही कुअरजीनामा ऋषिः लुम्पाकवेषभृतं मेघजीऋषिं निजपदे स्वस्थाने व्यधात्स्थापयति स्म । यथा इवार्थे । क इव । पल्लीपतिरिव । यथा पल्लीपतिः पित्रातीवान्यायकारित्वात्कुपितेन स्वदेशात्प्रवासितं स्वपल्लीप्राप्तं नितरां क्रूरानीतिकारकत्वेन स्वस्थानोचितं पुत्राभावाद्वङ्कचूलं नाम राजपुत्रं निजपदे निधत्ते स्म । अथ वा रतिकलहकुपितपराङ्मुखभवनापरस्थानस्थचौरिकार्थागततद्वङ्करङ्कस्पर्शनातिस्मरपरवशीभूतस्ववशाप्रार्थनाप्रक्रमनिर्व्यूढनिष्कलङ्कशीलव्रतदर्शनाह्लादितकेशववसुधावासवः स्वपदे युवराजपदे स्थापितवान्वङ्कचूलं नृपनन्दनम् ॥

श्लोकार्थ

પલ્લિપતિએ જેમ વકચૂલને પોતાના પદે સ્થાપ્યો હતો તેમ લુંપાકમતના સ્વામી કુંવરજીએ મેઘજીને પોતાના પદે સ્થાપ્યા હતા. ॥૧૦૬॥

सिद्धान्तानेष निध्यायन्कदाचित्तत्वचक्षुषा ।
प्रतिमामार्हतीं चित्रवल्लीं चाष इवैक्षत ॥१०७॥

एष मेघजीऋषिः कदाचित्कस्मिन्नपि प्रस्तावे । सिद्धान्तानां चाराङ्गाद्यङ्गोपपातिद्युपाङ्गप्रमुखानागमान्निध्यायन् विलोकमानः सन् तत्वचक्षुषा शुद्धमनोनयनेन कृत्वा अर्हतां तीर्थकृतामियमार्हती तां भगवत्प्रतिमां ऐक्षत विलोकते स्म । क इव । चाष इव । यथा नीलचाषः चित्रवल्लीमीक्षते । किं कुर्वन् । ध्यायन् पश्यन् । कान् । आ सामस्त्येन गमो गमनमुपलक्षणादागमं गमागमौ येषु त आगमाः भूमीप्रदेशाः तान् । 'चित्रकवल्लीं चाषः' इति स्त्रोक्ते ॥

श्लोकार्थ

જેમ ચાષપક્ષી ચોતરફ જોતાં ચિત્રાવેલને જુવે તેમ મેઘજી ઋષિએ સિદ્ધાંતોનું તત્ત્વદ્રષ્ટિથી (શુદ્ધમન અને શુદ્ધનયનથી) અવલોકન કરતા જિનેશ્વર ભગવંતની પ્રતિમાને જોઈ. ॥૧૦૭॥

लुम्पाकानां मतात्तस्मादिव कारानिकेतनात् ।
निर्गन्तुं कामयामास स ततो मेघजीमुनिः ॥१०७॥

ततो जिनप्रतिमाक्षरदर्शनानन्तरं स मेघजीमुनिस्तस्माल्लुम्पाकमतान्निर्गन्तुं निःसर्तुं कामयामास कांक्षति स्म । कस्मादिव । कारानिकेतनादिव । यथा कश्चिज्जनः न्यायेन वा अन्यायेन न्यायेऽप्यन्यायीकृत्य वैरिबाहुल्यादिति न्यायात् । चारके नृपादिना क्षिप्तः स तस्माद्बन्दिमन्दिरात् प्रपञ्चचातुर्येण कृत्वा निर्गन्तुं कामयते । इति मेघजीमुनेः प्रतिमाक्षरदर्शनात्प्रतिबोधः ॥

श्लोकार्थः

જેમ કોઈ કેદી પુરૂષ કારાગારમાંથી નીકળવાની કામના કરે તેમ મેઘજી ઋષિએ સિદ્ધાંતોમાં જિનપ્રતિમા સંબંધી અક્ષરો જોઈને, લુંપાકમતમાંથી નીકળવાની કામના કરી. ॥૧૦૮॥

तन्मताधिकृतान्वेषधरान्वागुरिकानिव ।
पाशे पातयतो मुग्धान्मृगानिव विवेद सः ॥१०९॥

स मेघजीमुनिस्तस्य लुम्पाकस्य यन्मतं पक्षस्तत्राधिकृतोऽङ्गीकृतो यो वेषो विरुद्ध-साधुलिङ्गं धरतीति तन्मतस्याधिकारिणो वेषधरा वा केवललिङ्गधारकास्तान् लुम्पाकान् वागुरिकान् वागुरा मृगजातिलकामृगादिजन्तुग्रहणपाशोऽस्त्येषामिति वागुरिकाः । अस्त्यर्थे इकः । 'अइके मत्वर्थे' इति सारस्वतेन । तान् जालिकानिव विवेद हृदि जानाति स्म । किं कुर्वतः । मृगान् हरिणानिव मुग्धानभिज्ञान् तत्त्वातत्त्वविचारणा-चतुरेतरान् जनाञ्जन्तून् पाशे पाशसदृशे कुमते पातयतः क्षेपयतः । तथात्रापि कोऽपि मुग्धः प्रतिमाप्रागल्भ्यनिर्मुक्तो न किमपि कपटचर्यादिकं वेत्तीति तादृग्ज्ञः केनापि धूर्तेन वाग्बन्धादिप्रदानेन विमोह्य स्वीकृतो लोकैः पाशे पातितेऽसौ विमुच्यते ॥

श्लोकार्थ

જેવી રીતે શિકારી (વાગુરિક) ભોળાં હરણોને પોતાની જાળમાં ફસાવે તેવી રીતે ભોળાજીવોને કુમતરૂપી જાળમાં ફસાવતા તે લુંપાકમતના વેષધારી સાધુઓને તેમણે (મેઘજીએ) જાણ્યા. ॥૧૦૯॥

अमी वीडूखां प्रकुर्वन्ति बका इव शनैः शनैः ।
सतां सम्यग्दृशो हन्तु काङ्क्षन्तः शफरीरिव ॥११०॥

अमी लुम्पाकवेषधारका बका बकोटा इव शनैः शनैर्मन्दं मन्दमालोक्यालोक्य मुग्धविप्रतारणबुद्ध्या वीह्वां गमनं प्रकुर्वन्ति पादौ विमुञ्चन्ति । उत्प्रेक्ष्यते सताम् अस्मासु श्रावकत्वं नाम्ना विद्यते परं तत्त्वं सम्यक्तया न विद्मः तेषां श्राद्धानां सतां परं मुग्धानां सम्यग्दृशः सत्यज्ञानदृष्टी । सम्यक्त्वानीत्यर्थः । हन्तुं व्यापादयितु भ्रंशयितुमिव काङ्क्षन्तः इच्छन्तः । का इव । शफरीरिव । यथा बकाः शफरीर्मत्स्यीर्हन्तुं स्पृहयन्तः शनैर्हिण्डन्ते ॥

## શ્લોકાર્થ

જેમ બગલાઓ માછલીઓ મારવાની ઈચ્છાથી મંદ મંદ પગલા ભરે તેમ લુંપાકમતનાં વેશધારીઓ, સજ્જનપુરૂષોની જ્ઞાનદૃષ્ટિ ભ્રષ્ટ કરવા માટે મંદમંદપણે ચાલતા હતા. ॥૧૧૦॥

विगोपनमिवैतेषां वेष वेषभृतामवैत् ।
तन्मतस्थं पुनर्मेने सौधं कूपगतं निजम् ॥१११॥

स मेघजीऋषिरेतेषाममीषां कलिकालविलसितेन महावीरदेवशासनेऽपि कण्टकप्राचुर्याद्बहुभूतानां लुम्पाकानां वेषभृतां जैनाभासलिङ्गधारिणां वेषं लिङ्ग विगोपनमिव विडम्बनाप्रायमवैत् मनसि बुबुधे । पुनः स मेघजीमुनिः तेषां लुम्पाकानां मते पक्षे तिष्ठतीति तन्मतस्थं निजमात्मानं सौधं कूपगतमिवेत्यध्याहारः । बह्वन्धकारकलितपातालावटमध्यनिष्पतितमिव मेनेऽज्ञासीत् । इति गर्भितोपमा ॥

## શ્લોકાર્થ

તે લુંપાકમતના વેષધારીઓના વેષને મેઘજી ઋષિએ ખરેખર વિડંબનામાત્ર માન્યો. તેમણે લુંપાકમતમાં રહેલી પોતાની જાતને કુવામાં પડેલી જેવી માની ॥૧૧૧॥

आप्तोक्तिरत्नगर्भायाममीषां प्रतिमार्हताम् ।
निधिकुम्भीव दुःस्थानां पथिकी नाभवद्दृशोः ॥११२॥

आप्तोक्तिरागमः सैव रत्नगर्भा वसुंधरा तस्यां दुःस्थानां दरिद्राणां निधिकुम्भीव रत्ननिधानकलशीव । अमीषां लुम्पाकमतपक्षीभूतभूयोवेषधारिणामर्हतां तीर्थकृतां प्रतिमा बिम्बमर्चा दृशोर्लोचनयोः पथिकी विद्यमानापि पान्थी गोचरा नाभवत् । तत्र निमित्तं तु महांह एव ॥

श्લોકાર્થ

જેમ દરિદ્રી પુરૂષોને રત્નભંડાર દુર્લભ્ય છે તેમ આગમરૂપી રત્નગર્ભા-પૃથ્વીમાં રહેલો જિનપ્રતિમારૂપી રત્નભંડાર દરિદ્ર એવા લુંપાકમતાવલંબી પુરૂષોના દૃષ્ટિપથમાં પ્રાપ્ત ન થયો. ! ॥૧૧૨॥

ऐहिकामुष्मिके सौख्ये दूरेऽत्र स्थायिनो मम ।
नीरतीरे सरःपङ्के निमग्नस्येव दन्तिनः ॥ ११३ ॥

अत्र भवपरम्परापारावारप्रतिहरित्प्रसरत्पयःपूरान्तरनिपतनप्रस्फुरन्महावर्तभूते लुम्पाकमते तिष्ठति चिरं स्थिर्ति विरचयतीत्येवशीलस्य स्थायिनो मम मेघजीनाम्नात्मनः इहलोकपरलोकसंबन्धिनी सौख्ये शर्मणी दूरे विप्रकृष्टे वर्तेते । भगवदाज्ञाविरोधेनोद्भूतभूयस्तरदुरन्तदुरितोदयप्रादुर्भूततिर्यङ्नरकाद्यनन्तदुर्भवपरम्परोपलम्भतः शर्मलेशोऽपि कुत्रस्थः सत्त्वः प्राप्नुयादिति । कस्येव । दन्तिन इव । यथा सरःपङ्के निदाघानिदाघकृद्दर्भद्युतितीव्रतरकरनिकरशुष्काल्पीयः सलिलपल्वलबहुलजम्बाले निमग्नस्य सर्वैरप्यङ्गोपाङ्गैर्ब्रूडित्वा स्थितस्य किंचिल्लक्ष्याङ्गस्य नीरतीरे पानीयप्रतीरे अतिदूरे भवतः ॥

શ્લોકાર્થ

અલ્પજલવાળા સરોવરના કાદવમાં ખુંટેલા હાથીને સરોવરનો કિનારો દૂર હોય છે તેમ જિનાજ્ઞા વિરૂદ્ધ ભયંકર લુંપાકમતરૂપી સમુદ્રમાં ડુબેલા એવા મને (મેઘજીને) લૌકિક અને પારલૌકિક સુખ ઘણું દૂર છે. ॥૧૧૩॥

चेतसीति विचिन्त्यासौ पाण्डावानिव पण्डितः ।
कैश्चिच्चालोचचतुरैरालोच्य सचिवैरिव ॥ ११४ ॥

स पल्वलमिवामेध्यं हंसो लुम्पाकनायकः ।
अत्याक्षीत्पक्षमात्मीयं विनेयैस्त्रिंशता समम् ॥ ११५ ॥ (युग्मम्)

स मेघजीनामा लुम्पाकानां नायकः स्वामी त्रिंशता शतंख्यैर्विनेयैः शिष्यैः सममात्मीयं लुम्पाकसंबन्धिनं पक्षं लुम्पाकमतं गच्छं वा अत्याक्षीज्जहाति स्म । क इव हंस इव । यथा राजमरालः पुरीषानेकास्थिपञ्जरविकटकण्टकठिक्करकबहुजलं वालशैवालकलितमत एवामेध्यमपावनं वायसनिवासोत्पादशयनादिशकुन्तसंतानं पल्वलं त्यजति ।

किं कृत्वा । इत्यमुना प्रकारेणार्थात्स्वयं तथा सिद्धान्तविरुद्धवचनभाषणभीरुकैस्त्वाभिलषितज्ञापरगीतार्थैश्च चेतसि स्वस्यैव चेतसि वेति । विचिन्त्य चिन्तयित्वा । विचार्येत्यर्थः । क इव । पण्डावानिव । यथा तत्त्वानुगतमतिमान पण्डितो मेधावी विचिन्तयति । सम्यग्देवगुरुधर्मादितत्त्वं विचारयति । च पुनः सचिवैरमात्यैरिव आलोचेषु मन्त्रणेषु चतुरैर्निपुणैः कैश्चिदात्मीयैः सिद्धान्तवचनभाषणातिभीरुकैस्त्वाभिमताभिप्रायज्ञापरगीतार्थैश्चालोच्य विचारयित्वा च ॥ युग्मम ॥ इति मेघजीमुनेर्लुम्पाकमतत्यजनम् ॥

## શ્લોકાર્થ

મેઘજીઋષિએ, પંડિતની જેમ આ પ્રમાણે વિચારીને, અથવા મંત્રણા કરવામાં ચતુર મંત્રીઓની જેમ વિચારીને જેમ રાજહંસ અપવિત્ર ખાબોચીઆને ત્યાગ કરે તેમ મેઘજીઋષિએ પોતાના ત્રીસ સાધુઓની સાથે પોતાના મતને (લુંપાકમતને) ત્યાગ કર્યો. ॥૧૧૪॥ ॥૧૧૫॥

निर्जित्य स्वमतैश्वर्यस्मयं तौर्यत्रिकोत्सवैः ।
प्राणमत्प्रतिमां जैनीं जयीव निजमातरम् ॥ ११६ ॥

स मेघजीऋषिः स्वस्यात्मनो मतस्य लुम्पाकवर्गस्य ऐश्वर्यमाधिपत्यं तस्य स्मयमहंकारं गर्वं निर्जित्य पराभूय । तदैश्वर्यं मुक्त्वेत्यर्थः । अथवा 'निर्मुच्य' इति पाठो वा । तत्र निःशेषेण मुक्त्वा संबन्धमात्रमप्यरक्षयन् त्यक्त्वा । 'निर्मुक्तः पञ्चदेह्या परमसुखमयः प्रास्तकर्मप्रपञ्चः' इति पञ्चमीस्तुतौ । तौर्यत्रिकोत्सवैर्गीतनृत्यवाद्यत्रिकेणोपलक्षितश्राद्धजनारब्धमहामहैः सार्धं जैनीं जिनसंबन्धिनीं प्रतिमां मूर्तिं प्राणमत् प्रणमति स्म । क इव जयीव । यथा निखिलदिङ्मण्डलनिर्जयनशीलः पृथिवीपालो निजमातरं स्वजननीं प्रणमति ॥

## શ્લોકાર્થ

જેમ દિગ્વિજય કરીને આવેલો રાજા પોતાની માતાને પ્રણામ કરે તેમ મેઘજીએ લુંપાકમતના અધિપતિપણાના ગર્વને જીતીને (ત્યાગ કરીને) ગીત, નૃત્ય અને વાજિંત્રો સહિત શ્રાવકોએ કરેલા ઉત્સવપૂર્વક જિનેશ્વર ભગવંતની પ્રતિમાને પ્રણામ કર્યા. ॥૧૧૬॥

कलौ स्वकामिताप्राप्तैर्लोकानालोक्य सीदतः ।
पूर्णकामांश्चिकीर्षुं तान्स्वः सुरद्रुमिवागतम् ॥ ११७ ॥

स्वोदयाय कलिं लुप्त्वा किमु कर्तुं कृतं युगम् ।
नक्तंदिनमिवादित्यं धर्मं मूर्तमिवोद्गतम् ॥ ११८ ॥

चतुर्थारकवल्लोकान्पञ्चमेऽप्यरकेऽथ वा ।
अवतीर्णमिवोद्धर्तुं कृपया गौतमं पुनः ॥ ११९ ॥

तपागच्छश्रिया लीलाललामिव जङ्गमम् ।
श्रीहीरविजयं प्रीतेरैषीदेष निषेवितुम् ॥ १२० ॥ (कलापकम्)

एष मेघजीऋषिः श्रिया सूरलक्ष्म्या कलितं हीरविजयम् । श्रीहीरविजयसूरिमित्यर्थः । प्रीतेरानन्दात् । विशुद्धधर्मप्ररूपकत्वेन गुरुस्नेहाद्वा निषेवितुमुपासितुमैषीद्वाञ्छति स्म । उत्प्रेक्ष्यते तपागच्छश्रिया तपोगणलक्ष्म्या जङ्गमं संचरणशीलं लीलाललामं शृङ्गारकृते विधृत कनकतिलकमिव । ललामशब्दो नकारान्तोऽकारान्तोऽप्यस्ति । 'ललामवल्ललामश्चादन्तः पुंक्लीबलिङ्गे नकारान्तः क्लीब एव' इत्यनेकार्थः । अथ हीरविजयसूरिं विशिनष्टि । उत्प्रेक्ष्यते स्वः स्वर्गलोकादागतं भूमिमण्डलेऽवतीर्णं सुरद्रुं कल्पवृक्षमिव । किं कर्तुमिच्छुम् । तान् लोकान् पूर्णकामान् इच्छापूरणपर्यन्ताधिगमसमस्तस्वमनोभिलाषांश्चिकीर्षुं कर्तुमिच्छुम् । किं कृत्वा । कलौ कलिनाम्नि युगे पञ्चमारके स्वेषामात्मनां कामितानामभीष्टानामप्राप्तेरनासादनात्सीदतः दुःखीभवतः सकलान् यावद्वसुधावलयवर्तिनो लोकानालोक्य विज्ञायेत्यर्थः । पुनरुत्प्रेक्ष्यते मूर्तं शरीरवन्तमङ्गीकृतकायं वा उद्गतं प्रकटीभूतं धर्मं जैनधर्ममिव । किं कर्तुम् । नक्तंदिनमहोरात्रम् । निरन्तरमित्यर्थः । स्वस्यात्मन उदयाय चतुर्भिरंशैस्तिरोभवनाय चतुरङ्गतया प्रादुर्भवाय वा कलिं प्रबलनापसंतापास्पदं कलियुगं लुप्त्वा विलुप्य निखिलावनीमण्डलान्निकास्य कृतं युगं प्रथमसमयं कर्तुं विधातुम् । कृतयुगे हि धर्मश्चतुरङ्गः स्यात् । यदुक्तम् नैषधे 'पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे' इति । कमिव । आदित्यमिव । यथा भास्करः नक्तं निशां विलुप्य दिनं वासरं कर्तुमुद्गच्छति । पुनरुत्प्रेक्ष्यते पञ्चमे दुःसमानामन्यप्यरके कृपया कारुण्यरससमुद्गतया लोकञ्जगज्जन्तून् भविकजनान्वा उद्धर्तुं भवविकटवटादुद्धृत्य मोक्षे महानन्दपदे नेतुं प्रापयितु पुनर्द्वितीयवारमवतीर्णं गृहीतावतारं गौतममिव श्रीमन्महावीरप्रथमशिष्य गणधराग्रगण्यमिव ॥ चतुर्भिः कलापकम् ॥

### શ્લોકાર્થ

કલિયુગમાં સ્વાભિષ્ટ વસ્તુ ન મળવાથી દુ ખી બનેલા લોકોને જોઈને તેઓની અભિલાષા પૂર્ણ કરવાની ઈચ્છાથી સ્વર્ગમાંથી આવેલા કલ્પવૃક્ષની જેમ, વલી જેમ

સૂર્ય રાત્રિનો લોપ કરીને દિવસ કરવા ઉગે તેમ કલિયુગનો લોપ કરીને કૃતયુગ કરવા માટે અર્થાત્ ધર્મનો ઉદ્યોત કરવા માટે સાક્ષાત મૂર્તિમંત જૈનધર્મની જેમ, તેમ જ પાચમા આરામાં દુખથી સંતપ્ત ભવ્યજીવોના ઉદ્ધાર કરવા માટે ચોથા આરાની જેમ ગૌતમસ્વામીએ કરૂણાવડે ફરીથી અવતાર લીધો હોય તેમ અને તપાગચ્છની લક્ષ્મીનાં લલાટપટ્ટ ઉપર જાણે જંગમ સુવર્ણનું તિલક હોય તેવા ગુણનિધિ શ્રીહીરવિજયસૂરિની મેઘજીમુનિ સ્નેહપૂર્વક ઉપાસના કરવાની અભિલાષાવાળા બન્યા ॥૧૧૭॥૧૧૮॥૧૧૯॥૧૨૦॥

व्रतं जिघृक्षुः सोऽकाङ्क्षीद्धीरसूरेः समागमम् ।
श्रीसुव्रतजिनस्येव कार्तिकः श्रेष्ठिपुङ्गवः ॥ १२१ ॥

स मेघजीऋषिः व्रतं प्रव्रज्यां जिघृक्षुः गृहीतुमिच्छुः सन् हीरसूरेर्हीरविजयसूरीश्वरस्य समागममकमिपुरे पादावधारणं समागमनमकाङ्क्षीत् वाञ्छति स्म । क इव । कार्तिक इव । यथा श्रेष्ठिनां श्रीदेवताप्रतिमाङ्कितबद्धशिरःसुवर्णपट्टानां नगराधिकारिमुख्यानां मध्ये पुङ्गवः प्रधानः कार्तिकनामा श्रेष्ठी सुव्रतजिनस्य श्रीमुनिसुव्रतस्वामिनः आगमनं काङ्क्षति स्म ॥

શ્લોકાર્થ

જેમ શ્રેષ્ઠીઓમાં અગ્રણી કાર્તિક શ્રેષ્ઠી શ્રીમુનિસુવ્રતસ્વામિના સમાગમના અભિલાષી હતા તેમ મેઘજીઋષિ વ્રત-પ્રવજ્યા ગ્રહણ કરવાની ઇચ્છાથી શ્રીહીરવિજયસૂરિના સમાગમને ઝંખતા હતા. ॥૧૨૧॥

विज्ञाय हीरसूरीन्दुराशयं मेघजीमुनेः
आगादहम्मदावादे माकन्दे कीरवत्क्रमात् ॥ १२२ ॥

हीरसूरीन्दुः हीरविजयसूरिशर्वरीसार्वभौमः क्रमाद्ग्रामानुग्रामादिविहारस्य परिपाट्या अहम्मदावादे गुर्जरमण्डलविपुलाखमण्डलनिवासस्थानत्वेन राजनगरे अगात् आगच्छति स्म । स्वयमागत्य अकमिपुरे समवसृत इत्यर्थः । किंवत् । कीरवत् । यथा माकन्दे सहकारमहीरुहे शुकः समेति । किं कृत्वा आगतः । मेघजीमुनेराशयं स्वपार्श्वे संयमग्रहणाभिप्रायं विज्ञाय ज्ञात्वा स्वतः परतो वा अवसाय ॥ इति हीरविजयसूरेरकमिपुरीगमनम् ॥

श्लोकार्थ

જેમ આમ્રવૃક્ષ પાસે પોપટ આવે તેમ મેઘજીઋષિના આશયને જાણીને શ્રીહીરવિજયસૂરિ સ્વયં અહમદાવાદ રાજનગર પધાર્યા. ॥૧૨૨॥

प्राच्यामिव प्रतीच्यां च महोऽप्यधिकमावहन् ।
* परोलक्षान्दधत्तार्क्ष्यान्गृह्णन्राज्ञां श्रियं पुनः ॥ १२३ ॥
सैंहिकेयाञ्जयञ्शौर्याद्योऽजैषीत्पूषणं श्रिया ।
स गुर्जरेष्वथागच्छत्साहिः श्रीमदकब्बरः ॥ १२४ ॥ (युग्मम्)

अथास्मिन्व्यतिकरे सकलवसुधावलयप्रसिद्धः श्रीमाननेकजनपदनायकाधिपत्याद्वैतलक्ष्म्या लक्षितः साहिः पातिसाहिः गुर्जरेषु आगच्छत्समागतः । स कः । योऽकब्बरसाहिः श्रिया वैभवेन कृत्वा पूषणं सहस्रकिरणमजैषीज्जयति स्म पराबभूव ।'नमसितुमना यन्नाम स्यान्न संप्रति पूषणम्' इति नैषधे । किं कुर्वन् । प्राच्यां पूर्वस्यां दिशि इव प्रतीच्यां पश्चिमायामप्याशायामप्यधिकमतिशायितम प्रतिपक्षपक्षलक्षेषु.सहं स्वमहो निजप्रतापमावहन् आकलयन् । पुनः किंभूतः । लक्षात्परे *परोलक्षा लक्षशस्तार्क्ष्यान् जात्यतुरङ्गमान् अर्थादश्ववरान् दधद्धारयन् । कटके कति वाजिनः सन्ति लक्षं द्विलक्षी त्रिलक्षी वा इति लोकभाषैव वर्तते । पर तावन्तोऽश्ववारा एव ज्ञेया इत्युक्तेः । पुनः किं कुर्वन् । राज्ञामपरापरपृथ्वीपालानां श्रियं संपद देशनगरग्रामादिविभूतिं गृह्णन्नाददानः । पुनः किं कुर्वन् । शौर्यात् शूरत्वात्सिंहिकाया अपत्यानि सैंहिकेया केसरिणः जयन्वशमवन् पराक्रमन् सिंहव्याघ्रादिश्वापदान्निघ्नन् । सूर्यस्तु प्रतीच्यां मन्दायमानमहाः समास्व एव राज्ञः श्रियं दिशन् । 'पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः' इति रघौ । तथा सैंहिकेयात्स्वर्भानोः सकाशादभिभवं लभमानः । अत एवाकब्बरसाहेः सूर्यजयो युक्त एव ॥ युग्मम् ॥ इत्यकब्बरः ॥

श्लोकार्थ

[ તે સમયે ગુર્જરદેશમાં સૂર્યનો પણ પરાભવ કરે તેવો 'અકબર બાદશાહ આવ્યો'.] સૂર્ય તો પૂર્વદિશામાં જ પોતાના પ્રતાપને વિસ્તારે છે જ્યારે બાદશાહ તો પૂર્વની જેમ પશ્ચિમદિશામા પણ રહેલા રાજાઓ ઉપર પોતાનો અધિકાધિક પ્રતાપ વિસ્તારતો, સૂર્ય

* पाणिनीयमते तु 'नाञ्चलौ' इति. सूत्रस्थ 'पारस्करादित्वात्सुट्' इति, कैयटानुसारेण सुट् एव संभवे तस्य परादित्वेन पदान्तत्वाभावाद्रुत्वोत्वयोरप्राप्तौ 'परस्सलक्षान्' इति भवेत्.

સમાશ્વં અર્થાત્ સાત અશ્વોને ધારણ કરે છે જ્યારે બાદશાહ જાતિવંત એવા લાખો અશ્વોને ધારણ કરતો લાખો શત્રુ રાજાઓની લક્ષ્મીને ગ્રહણ કરતો, તેમજ સૂર્ય તો પોતાના શત્રુ રાહુથી પરાભવ પામે છે જ્યારે આ તો કેશરીસિંહ, વ્યાઘ્ર આદિ દુર્ધર શ્વાપદોનો પરાભવ કરતો આવા પ્રકારની પોતાની લક્ષ્મીથી શોભાથી સૂર્યનો પરાભવ કરતો અકબર બાદશાહ ગુર્જરદેશમા આવ્યો. ॥૧૨૩॥૧૨૪॥

साहिना सार्धमभ्येयुः प्राच्याः केऽपीह नैगमाः ।
शर्वरीसार्वभौमेन नभोमार्गे ग्रहा इव ॥ १२५ ॥

साहिना अकब्बरपातिसाहिना सार्धं केऽपि केचन प्राच्याः पूर्वदिक्संबन्धिनः नैगमा वणिजो व्यवहारिणः इह गुर्जरमण्डले अभ्येयुरागताः । के इव । ग्रहा इव । यथा शर्वरीसार्वभौमेन विधुना सार्धं नभोमार्गे गगनाङ्गणे ग्रहाः समायान्ति ॥

શ્લોકાર્થ

જેમ આકાશમાં ચન્દ્રની સાથે ગ્રહો આવે છે તેમ ગુર્જરદેશમાં બાદશાહની સાથે પૂર્વદિશાના કેટલાક વેપારીઓ આવ્યા. ॥૧૨૫॥

तेऽप्यासञ्शासने जैने लीना मीना इवाम्बुनि ।
स्थानसिंहादिमा मान्या अमात्या इव भूपतेः ॥ १२६ ॥

ते नैगमा अपि जैने शासने भगवत्संबन्धिनि तपागच्छाभिधाने शासने लीना निलीयमानमानसाः एकतानीकृतचित्ताः सन्ति । क इव । मीना इव । यथा अम्बुनि पानीय विषये लीनास्तिष्ठन्ति । किंभूताः । स्थानसिंह रामासाहसूनु आदिमः प्रथमो मुख्यो वा येषु ते तादृशाः । पुनः किंभूताः । महीपतेरकब्बरपातिसाहेर्मान्या माननीयाः । क इव । अमात्याः सचिवा भूपतेर्माननार्हा भवन्ति ॥ इति प्राचीनश्राद्धाः ॥

શ્લોકાર્થ

જેમ જલમા મીન લીન હોય છે તેમ રામાશાહના પુત્ર થાનસિંહ આદિ શ્રાવકો શ્રીજૈનશાસનમાં ચુસ્ત હતા અને રાજાના મંત્રીઓની જેમ અકબર બાદશાહના તેઓ માનીતા હતા. ॥૧૨૬॥

अरंतुदं कुपक्षाणामिवासेचनकं सताम् ।
परिव्रज्योत्सवं कर्तुं काङ्क्षन्तो मेघजीमुनेः ॥ १२७ ॥

निशितायसशल्यानि हृदि मिथ्यादृशामिव ।
आनयन्ति स्म ते तूर्याण्यकब्बरमहीहरेः ॥ १२८ ॥ (युग्मम्)

ते प्राचीनाः श्राद्धा अकब्बरनाम्नो महीहरेः पृथ्वीपुरंदरस्य तूर्याणि वादित्राण्यानयन्ति स्म । उत्प्रेक्ष्यते मिथ्यादृशां कुवादिनां हृदि हृदये वक्षसि निशितानि तीक्ष्णानि आयसानि लोहमयानि शल्यानि त्रिशूलानीव । 'हृदि शल्यमिवार्पितम्' इति रघौ । 'अतिपीडाकारित्वात्त्रिशूलम् । इति तद्वृत्तिः । तथा 'परस्परोल्लासितशल्यपल्लवे' इति नैषधे । 'मिथ उल्लालितकुन्ता येऽग्रे' इति तद्वृत्तिः । ततः शल्यानि कुन्ता इव । तथा 'शल्यं शस्त्रशलाकयोः' इत्यनेकार्थे । शस्त्राणीव वा । प्राच्याः किं कुर्वन्तः । मेघजीमुनेः प्रव्रज्याया दीक्षाया उत्सवं कर्तुं निर्मातुं काङ्क्षन्तः ईहमाना । किंभूतं परिव्रज्योत्सवम् । उत्प्रेक्ष्यते कुपक्षाणां लुम्पाकादीनां कुमतभाजामरंतुदं मर्मव्यथकमिव । पुनरुत्प्रेक्ष्यते सतां साधूनां जैनानां सुदृशामासेचनकमाप्यायकमिव । 'तदासेचनकं यस्य दर्शनाद्दृङ् न तृप्यति' इति हैम्याम् । अत्र लालावण्टान्यायेनोभयत्रापि इव संबध्यते ॥ युग्मम् ॥ इति वाद्यानयनम् ॥

**શ્લોકાર્થ**

કુમતવાળાઓના મર્મસ્થાનને વિંધનારા અને સત્પુરૂષો માટે અમૃતપાન તુલ્ય મેઘજીઋષિના દીક્ષામહોત્સવ પ્રસંગે, થાનસિંહ આદિ શ્રાવકો મિથ્યાદ્રષ્ટિઓના હૃદય માટે તીક્ષ્ણ લોહમય ભાલાસમાન અકબર બાદશાહના શાહી વાજિંત્રો લાવ્યા. ॥૧૨૭॥૧૨૮॥

स्पृहयद्भिरिवोद्वोढुं सिद्धिमुग्धमृगीदृशम् ।
श्राद्धैरस्य तपस्यायाः प्रारम्यत महामहः ॥ १२९ ॥

प्राच्यैर्गौर्जरैश्च श्राद्धैः श्रावकैरस्य मेघजीमुनेस्तपस्याया दीक्षाया महामहः महोत्सवः प्रारम्यत प्रारब्धः । उत्प्रेक्ष्यते सिद्धिर्मुक्तिरेव मुग्धमृगीदृक् कमनीयकामिनी ताम् । 'मुग्धो मूढे च रम्ये च' इत्यनेकार्थः । उद्वोढुं स्पृहयद्भिः कामयमानैरिव ॥

**શ્લોકાર્થ**

જાણે મુક્તિરૂપી રમણીય કન્યાને પરણવાની અભિલાષાવાળા હોય તેમ ગુર્જરદેશના

અને પૂર્વદેશના થાનસિંહ આદિ શ્રાવકોએ મેઘજીઋષિના દીક્ષામહોત્સવનો પ્રારંભ કર્યો. ॥૧૨૯॥

पूरिताशेषदिग्ध्वानढक्का तद्यशसामिव ।
तन्महो भूपदिग्जेत्रयात्राढक्काक्वणा इव ॥ १३० ॥

कुलशैलपयोराशिप्रतिध्वनिविधायिनः ।
वाद्यमानघनातोद्यनादाः प्रादुरभीभवन् ॥ १३१ ॥ (युग्मम्)

वाद्यमानानि ताड्यमानानि वादित्रवादिकैर्जनैः करैर्दण्डेन वा निहन्यमानानि घनानि प्रभूतानि आतोद्यानि तूर्याणि तेषां नादाः शब्दाः प्रादुरभीभवन् प्रकटीभवन्ति स्म । किंभूताः । कुलशैलाः मेरुमन्दरकैलाशादिकाः कुलाचलाः तथा पयोराशिः समुद्रस्तेषु ये प्रतिध्वनयः प्रतिशब्दास्तान्विदधते प्रणयन्तीत्येवंशीलाः । उत्प्रेक्ष्यते तद्यशसां तस्य मेघजीऋषेः यशसां कीर्तीनां पूरिता निर्भरं भृता अशेषाः समस्ता दिशो दशाप्याशा यैस्तादृशा ध्वानाः शब्दा यासां ता ढक्का यशःपटहानि स्वाना इव । अथवा । तस्य मेघजीमुनेर्यश एव भूपो राजा तस्य दिशां समस्तहरितां जयनशीला यात्रा वैरिव्रजोपरि विजयकृते प्रस्थानं तस्य तदर्थं वा ढक्काक्वणा निःस्वाननिःस्वना इव । राज्ञां हि प्रयाणेषु निःस्वाना वाद्यन्ते, तद्ध्वनिभिश्च सर्वेऽपि सज्जीभवन्ति ॥ युग्मम् ॥

શ્લોકાર્થ

મેરૂ-કૈલાસ આદિ કુલપર્વતો તથા સમુદ્રમાં પોતાના અવાજના પડઘા પાડનારા વાજિંત્રોના સ્પષ્ટ અવાજો પ્રગટ થયા. જાણે સમસ્ત દિશાઓમાં વ્યાપ્ત એવો મેઘજીઋષિના યશનો પટહ હોય અથવા મેઘજીઋષિના યશરૂપી રાજાનો દિગ્વિજયના પ્રયાણમાટેનો નિશાનડંકો હોય તેમ વાજિંત્રોના અવાજો પ્રગટ થયા. ॥૧૩૦॥૧૩૧॥

वदान्यैः श्रीदवद्दानं ददेऽगीयत गायनैः ।
अनर्ति नर्तकैरुच्चैर्वन्दिभिर्विरुदावली ॥ १३२ ॥

तत्र मेघजीऋषिदीक्षासमये श्रीदवद्धनदैरिव वदान्यैर्दानशौण्डैर्विश्राणनशीलैर्दत्तम् पुनर्गायनैर्गन्धर्ववर्गैर्मधुरध्वनि अगीयत । पुनर्नर्तकैर्नटैस्ताण्[illegible]ताम्बरविधा[illegible] रनर्ति नृत्यं निर्मितम् । पुनः वन्दिभिर्मङ्गलपाठकैर्विरुदानामावलि[illegible]

શ્લોકાર્થ

મેઘજીઋષિની દીક્ષાના સમયે કુબેર સમાન દાનવીર શ્રીમંતોએ અઢળક ધનનું દાન કર્યું- ગાંધર્વવર્ગે મધુર સ્વરે ગીતગાન કર્યું, નૃત્યકારોએ વિવિધ પ્રકારનાં નૃત્યોનું નિર્માણ કર્યું તેમજ મંગલ પાઠકોએ ઉચ્ચસ્વરે બિરૂદાવલિ કરી. ॥૧૩૨॥

वैधेयवन्निरीयान्धकूपात्कूपे पतामि किम् ।
परपक्षान्गणैः स्वस्य स्वस्याहूतिकृतस्तदा ॥ १३३ ॥

अवमत्येति दीक्षां स श्रीहीरविजयान्तिके ।
सत्याकृतिमिवादत्त संगमे सुगतिश्रियाम् ॥ १३४ ॥ (युग्मम्)

स मेघजीमुनिः श्रीहीरविजयसूरेरन्तिके संनिधौ पार्श्वे दीक्षां जैनतपस्यां जग्राह गृह्णाति स्म समादत्तवान् । कामिव । सत्याकृतिं सत्याकारमिव । लोके 'संचकार' इति प्रसिद्धः । कासाम् । सुगतीनां स्वर्गापवर्गफलदानां श्रियां लक्ष्मीणाम् । उत्प्रेक्ष्यते वा त्रिदिवशिखराणां सत्याकृतिमिव । किं कृत्वा । इत्यमुना प्रकारेण तदा तस्मिन्दीक्षाग्रहमहोत्सवसमये परपक्षान् परगच्छीयान् खरतरस्तनिकादीनवमत्यागणयित्वा । विमुच्येत्यर्थः । किंभूतान् परपक्षान् । स्वस्यात्मनः गणैर्गच्छैस्तस्य मेघजीमुनेराहूतिकृतः आकारणविधायिनः । आकारणं सूरिपदादिप्रदानादिना लोभयित्वा हठं कुर्वन्तीति तान् । इति किम् । यदहं वैधेयवन्मातृशासितो मूर्ख इव ज्ञानवानप्यज्ञानवानिव अन्धकूपात् ध्वान्तोपचितान्तरावटान्निरीय निर्गत्य पुनर्द्वितीयवारं कूपे अपरस्मिन्कूपे किं कथं पतामि झम्पामि । अपि तु नैव पतिष्यामीत्येवं विचार्येत्यर्थः ॥ युग्मम् ॥

શ્લોકાર્થ

ઈતરગચ્છવાળાઓએ આચાર્યપદ આદિ પ્રલોભનો બતાવ્યાં છતાં 'એક વખત અંધકાર પૂર્ણ કુવામાંથી નીકળીને મૂર્ખ માણસની જેમ પુનઃ અંધકારમય કુવામાં શા માટે પડું ?' આ પ્રમાણે સ્વયં વિચારીને, અન્યગચ્છવાળાઓનાં આમંત્રણને અવગણી મેઘજીઋષિએ શ્રી હીરવિજયસૂરિ પાસે સુગતિરૂપી લક્ષ્મીનાં સંગમની સાક્ષીભૂત એવી પ્રવ્રજ્યા ગ્રહણ કરી ॥૧૩૩॥ ॥૧૩૪॥

उद्द्योतं शासने तेने विजयं दुर्दृशां च यत् ।
इतीवास्य व्यधात्सूरिरुद्द्योतविजयाभिधाम् ॥ १३५ ॥

सूरिर्हीरविजयप्रभुः । उत्प्रेक्ष्यते इति हेतोरस्य मेघजीऋषेः उद्द्योतविजय इत्यभिधां नाम व्यधाच्चकार । इति किम् । यत्कारणादसौ त्यक्तलुम्पाकमताधिपत्यः शासने उद्द्योतं प्रकाशं तेने विस्तारयामास । च पुनर्दुर्दृशां कुपक्षाणां कुमतानां विजयमलुगणनारूपं विदधे निर्मितवान् । पराभवं विहितवानित्यर्थः ॥

### શ્લોકાર્થ

સૂરિજીએ મેઘજીઋષિનું ઉદ્યોત વિજય એવું નામ રાખ્યું 'લુંપાકમતના અધિપતિ આ મેઘજીઋષિ જિનેન્દ્રશાસનનો ઉદ્યોત કરનાર થશે ! અથવા કુપાક્ષિકોનાં વિજયનો પરાભવ કરશે ! જાણે આ હેતુથી જ ઉદ્યોતવિજય નામ રાખવામાં આવ્યું ન હોય ! ॥૧૩૫॥

पादपीठलुठन्मूर्धा बद्धाञ्जलिरसौ विभुम् ।
श्रीनाभ इव नाभेयं स्वयंभुवमवीभजत् ॥ १३६ ॥

असौ उद्द्योतविजयमुनिः विभुं हीरविजयसूरीन्द्रमवीभजत्सिद्धान्तोक्तविधिवद्विनयविधानादिप्रकारेणातिशयेन भजते स्म निषेवते स्म । तदेव दर्श्यते किंभूतः । पादपीठे पदासने लुठन्मिलन्मूर्धा मौलिर्यस्य । पुनः किंभूतः । बद्धाञ्जलिः ललाटपट्टघटितकरकमलकुड्मलः । क इव । श्रीनाभ इव । यथा श्रीनाभनामा गणधर नाभेर्नाभिनामनृपस्यापत्य संतानम् । नन्दन इति यावत् । नाभेयः श्रीऋषभदेवस्तं वृषभं स्वयंभुवं तीर्थंकरं भजते स्म । विशेषणे पूर्ववद् पादपीठे लुठन् संघट्टं प्राप्नुवन् मूर्धा मस्तक यस्य । तथा बद्धो रचितोऽञ्जलिः पाणिद्वययोजन येन ॥ इति मेघजीऋषिमहः ॥

### શ્લોકાર્થ

જેમ 'શ્રીનાભ' નામના ગણધર ભગવાન ઋષભદેવની ઉપાસના કરતા હતા તેમ ઉદ્યોતવિજયજી એ હાથ જોડી શ્રીહીરવિજયસૂરિના પાદપીઠને મસ્તકવડે સ્પર્શ કરી ગુરુસેવામાં તત્પર બન્યા. ॥૧૩૬॥

पारीन्द्र इव सूरीन्द्रः प्रणिहत्य तमोद्विपम् ।
नृणां व्यश्राणयद्बोधिं मुक्तापङ्क्तिमिवार्थिनाम् ॥ १३७ ॥

सूरीन्द्रो हीरविजयगुरुः नृणां भव्यप्राणिनां बोधिं सम्यक्त्वं व्यश्राणयद्ददाति स्म। कामिव। मुक्तापङ्क्तिमिव। क इव। पारीन्द्र इव। यथा केसरी अर्थिनां याचकानां मुक्तानां स्वदारितकुम्भिकुम्भमध्यनिष्पतन्मौक्तिकानां श्रेणी विश्राणयति प्रयच्छति। किं कृत्वा। प्रणिहत्य व्यापाद्य। किम्। तमः अज्ञानं पापं वा तद्रूपं श्यामत्वोत्तत्सदृशं द्विपं हस्तिनम् ॥

श्लोकार्थ

જેમ સિંહ હાથીઓના ગંડસ્થલને ચીરીને યાચકોને મોતીઓનું દાન કરે તેમ સૂરીન્દ્ર અજ્ઞાનરૂપી હાથીનું વિદારણ કરી ભવ્યજીવોને બોધિબીજરૂપી મોતીઓનું દાન આપતા હતા. ॥૧૩૭॥

मह्यां विहरति स्वैरं श्रीमत्सूरिपुरंदरे।
दानवर्षितया भव्यव्रजेनानेकपायितम् ॥ १३८ ॥

श्रीमति अद्वैतवैभवभासिनि हीरविजयनाम्नि सूरिषु पुरंदरे वासवे मह्यां महीमण्डले स्वैरं स्वेच्छया न पारतन्त्र्याद्विहरति विहारं विदधति सति दानं द्रविणादिविश्राणनं मदाम्भश्च वर्षतीत्येवंशीलस्तत्तया। 'दानं विश्राणनमदाम्भसोः' इत्यनेकार्थे। दानवर्षणस्वभावेन भव्यव्रजेन भविकजन्तुजातेन अनेकान्बहून्दुःस्थानर्थिनो वा पान्ति दारिद्र्याद्दुद्धरन्ति सुखीकुर्वन्ति च तेऽनेकपाः मतङ्गजाश्च तद्वदाचरित सामयोगिसदृशीभूत च ॥

श्लोकार्थ

અદ્વિતીયશોભાવાળા સૂરિપુરન્દર પૃથ્વીપર સ્વેચ્છાપૂર્વક વિહાર કરતા હતા, તેમના વડે ભવ્યજીવો પ્રત્યે બોધિબીજરૂપી દાનની વર્ષાદ્વારા હસ્તિની જેમ આચરણ કરાયું ॥૧૩૮॥

पितेव सूनुना सार्कं कम्माङ्गजेयतीन्दुना।
पत्तनं पावनीचक्रे हीरसूरीश्वरः क्रमात् ॥ १३९ ॥

हीरसूरीश्वरः क्रमादनुक्रमाद्विहारपरिपाट्या स्वतन्त्रससुखविचरणात् पत्तनमणहिल्लवाटकाभिधानपत्तनं पवित्रीकरोति स्म। कथम्। साकं सह। केन करणात्। कम्मासाधोरङ्गजो नन्दनः स एव यतिषु यतीनां मध्ये आह्लादकत्वाद्वागमृतवर्षित्वादिन्दुरिव। इन्दुराचार्येणेत्यर्थः। क इव। पितेव। यथा जनकः सूनुना सार्धं पत्तनादिपुरं समेति ॥

શ્લોકાર્થ

જેમ પુત્ર સાથે પિતા નગરમાં જાય તેમ શ્રી હીરવિજયસૂરિ સાધુઓમાં ચન્દ્ર સમાન વિજયસેનસૂરિ સાથે, અનુક્રમે અણુહિલ્લપુર પાટણમાં પધાર્યા. ॥૧૩૯॥

कृत्वा क्रमादनूचानपदनन्दिं मुनीश्वरः ।
देशं स्वसूनो राजेव गणं तस्य वशं व्याधात् ॥ १४० ॥

मुनीश्वरो हीरविजयव्रतिवासवः गणं तपागच्छं तस्य विजयसेनसूरेर्वशमायत्तं व्यधाच्चकार । किं कृत्वा । क्रमादनुक्रमेण । हेतौ तृतीया पञ्चमी च वाच्येति तृतीयार्थः । पूर्वसूरिपरिपाटीतः अनूचानपदस्याचार्यपदस्य नन्दिं द्वादशावर्तवन्दनानुज्ञानादिविधिं कृत्वा विधाय । क इव । राजेव । यथा सकलमेदिनीमण्डलाखण्डलो निजनन्दनस्य देशं स्वजनपदं वशमधीनं विधत्ते ॥

શ્લોકાર્થ:

જેમ રાજા પોતાના પુત્ર યુવરાજને પોતાનું રાજ્ય અર્પણ કરે તેમ શ્રીહીરવિજયસૂરિએ પૂર્વાચાર્યોની પરિપાટીઅનુસાર દ્વાદશાવર્તવંદનપૂર્વક અનુજ્ઞા વિધિ કરીને, આચાર્યપદની લક્ષ્મી શ્રીવિજયસેનસૂરિને સમર્પણ કરી. ॥૧૪૦॥

प्रभोर्नन्दिमहे हेमराजो मन्त्रीश्वरो मुदा ।
अमानि मानवैः श्रीद इवामितधनं ददत् ॥ १४१ ॥

प्रभोर्विजयसेनसूरेर्नन्दिमहे आचार्यपदानुज्ञावन्दनकदानादिमहोत्सवे हेमराजो नाम मन्त्रीश्वरः सचिवो मानवैर्जानपदैः पौरैर्नागरिकैश्च मनुजैः श्रीदो वैश्रवण एव अमानि विज्ञातोऽवबुद्धः ॥ किं कुर्वन् । मुदा प्रमोदेन अमितं प्रमाणातीतमगणितं धनं द्रविणं ददद्यच्छन् ॥ इति विजयसेनसूरिनन्दिः ॥

શ્લોકાર્થ

શ્રીવિજયસેનસૂરિના આચાર્યપદ પ્રદાનના મહોત્સવમાં અત્યન્ત હર્ષપૂર્વક અમાપ દાન દેતા ‘હેમરાજ’ નામના મંત્રીશ્વર, મનુષ્યોવડે કુબેરભંડારી સમાન મનાયા. ॥૧૪૧॥

प्रत्यतिष्ठत्परोलक्षा आर्हतीः प्रतिमाः प्रभुः ।
कल्पितानल्पसंकल्पाः कल्पसाललता इव ॥ १४२ ॥

प्रभुर्हीरविजयसूरिः १परोलक्षाः लक्षशः आर्हतीर्जैनीः प्रतिमा मूर्तीर्बिम्बानि प्रत्यतिष्ठत् प्रतितिष्ठति स्म । उत्प्रेक्ष्यते कल्पिताः प्रदत्ताः पूर्णीकृता अनल्पा अनेके भूयस्तराः संकल्पा मनोभिलषितानि याभिस्तादृशीः कल्पसाललताः कल्पद्रुमवल्लीरिव । 'कल्पद्रुमलताः' इति सोमसौभाग्यकाव्ये ॥

श्लोकार्थ

શ્રીહીરવિજયસૂરિએ ભવ્યજીવોનાં અનેક સંકલ્પો પૂર્ણ કરનારી સાક્ષાત્ કલ્પવેલી સમાન લાખો જિનપ્રતિમાઓની પ્રતિષ્ઠા કરી. ॥૧૪૨॥

पान्थानिव महानन्दपुटभेदनपद्धतौ ।
दीक्षायामास सूरीन्द्रोऽनेकानिभ्यतनूभवान् ॥ १४३ ॥

सूरीन्द्रोऽनेकान्परःशतानिभ्यतनूभवानिभ्यव्यवहारिपुत्रादीन्दीक्षयामास प्रव्राजयति स्म । उत्प्रेक्ष्यते महानन्दो मोक्षः स एव पुटभेदनं रत्नयोनिपत्तनम् । रत्नयोनिरिति लोकरूढिः । तथा च रत्नसदृशानां पुरुषाणामुत्पत्तिस्थानम् । महानन्दे तीर्थंकरचक्रवर्तिबलदेवमहामण्डलीकमहीपतिसूरिवाचकमहामुनिप्रमुखा रत्नेभ्योऽभ्यधिकानां महापुरुषाणामुत्पत्तिस्थानकं ततः पत्तनोपमानम् । तस्य पद्धतौ मार्गे पान्थान् पाथिकानिव ॥

श्लोकाथ

આચાર્ય, ઉપાધ્યાય, પ્રવર્તક આદિ મહાપુરૂષોની ઉત્પત્તિ સ્થાનરૂપ (રત્નયોનિ સમાન) શ્રી હીરવિજયસૂરિએ સેંકડો શ્રેષ્ઠીપુત્રોને પ્રવ્રજિત કર્યા. તે શ્રમણો જાણે મોક્ષરૂપી નગરમાર્ગના પથિકો ન હોય ! ॥૧૪૩॥

शाखाप्रशाखाश्रेणीभिराकीर्णः श्रमणाग्रणीः ।
व्यभाद्वट इव च्छायाच्छन्नः सेव्यश्च राजभिः ॥ १४४ ॥

श्रमणानां साधूनामग्रणीः पुरोगो हीरविजयसूरिः वट इव न्यग्रोधपादप इव व्यभात् ।

१- अत्र च १२३ सख्याकश्लोकटिप्पणिवत् 'परस्लक्षा' इति भवेत् ।

किंभूतः । शाखा विमलविजयसागरसुन्दरादिका प्रशाखा आनन्दहर्षसौभाग्यविशालकुशलादिकास्तासां श्रेणीभिराकीर्णः परिवृतः । पुनः किंभूतः । छायया शोभया छिन्नो निचितः सहितः । पुनः किंभूतः । राजभिर्भाविनिभूतोपचारादभूपालैः सेव्यः उपासनीयः वटस्तु स्कन्धनिसृताः शाखास्ताभ्यः पुनर्निर्गताः प्रशाखास्तासां राजिभिर्व्याप्तो भरितः । तथा छायया प्रतिच्छायिकयाञ्चितः सिञ्चितः । तथा राजभिर्यक्षैः । सेवनीयः । यक्षाणां वटवासित्वात् । 'यक्षः पुण्यजनो राजा गुह्यको वट वास्यपि' इति हैम्याम् ॥

## श्लोकार्थ

જેમ શાખા–પ્રશાખાઓથી વ્યાપ્ત અને યક્ષસેવિત વિશાળ છાયાયુક્ત વડવૃક્ષ શોભે તેમ વિમલ, વિજય, સાગર, સુંદર આદિ શાખાઓ અને આનંદ, હર્ષ, સૌભાગ્ય, વિશાલ, કુશલ આદિ પ્રશાખાઓની શ્રેણિથી વ્યાપ્ત શોભાયુક્ત અને અનેક રાજાઓથી સેવ્ય એવા શ્રી હીરવિજયસૂરિ શોભે છે. ॥૧૪૪॥

समस्थापयत्तीर्थसार्थाननेकान्तवादाब्जुजाम्भोजबन्धुः ।
महीमण्डले रन्तुमुत्कण्ठितायाः स्फुरत्केलिगेहा इव ब्रह्मलक्ष्म्याः ॥१४५॥

एकान्तेन निश्चयेन वदनमेकान्तवादो न एकान्तवादो यत्र तदनेकान्तवादं जिनशासनम् । यतः 'स्याद्वादवादाहर्तः स्यात्' इति हेमाचार्योक्तिः । स एव तदेव वाम्बुजं सरसीरुहं तत्र तद्विकाशने अम्भोजबन्धुः पद्मबान्धवः सहस्ररश्मिः सूरीन्द्रः अनेकान् शतश तीर्थानां पापसंतापापनोदस्थानानां सार्थान् समूहान् । यद्यपि हैम्याम् संघसार्थौ तु देहिनाम्' इत्युक्तम्, तथापि हेमचन्द्रेणैवानेकार्थे प्रोक्तम् 'सार्थो वृन्दे वणिग्गणे' इत्युत्पन्नभेदात्, तथा 'पदार्थसार्थ ' इत्यपि दर्शनात्, अनुप्रासत्वाद्वा लक्षणयापि समूहार्थ एव तस्मादानीतः । समस्थापयत्समस्थापयति स्म । उत्प्रेक्ष्यते–महीमण्डले पृथ्वीपीठे रन्तुं क्रीडितुमुत्कण्ठिताया उत्सुकिताया ब्रह्मलक्ष्म्या मुक्तिश्रिया । 'शिवं निःश्रेयसं श्रेयो निर्वाणं ब्रह्मनिर्वृतिः' इति हैम्याम् । स्फुरन्तः निखिलसुहृद्दृग्गोचरीभावं भजन्तः केलिगेहा विलाससौधानीव । सूरिस्थापितानां तीर्थानां पृथिवीपीठस्थायुकत्वात् अथ च ब्रह्मलक्ष्म्यास्त्रैलोक्योपरितमभूमौ स्थायित्वाच्च महीमण्डले क्रीडाकाङ्क्षेति ॥ इति हीरविजयसूरिधर्मकृत्यानि महिमसंपदः ॥

## શ્લોકાર્થ

અનેકાન્તવાદરૂપી કમલને વિકસ્વર કરવા માટે સૂર્યસમાન શ્રીહીરવિજયસૂરિએ પૃથ્વી ઉપર ભવ્યજીવોના પાપ સંતાપને દૂરકરનારાં અનેક ધર્મતીર્થોની સ્થાપના કરી. તે તીર્થો જાણે આ પૃથ્વીમંડલમાં ક્રીડા કરવા માટે ઉત્સુક બનેલી મુક્તિરૂપી લક્ષ્મીના સ્ફુરાયમાન ક્રીડાગૃહો ન હોય ! તેવા શોભે છે. ॥૧૪૫॥

अथो विहारप्रतिष्ठादीक्षाद्यनन्तरं कस्मिंश्चिदकब्बरसाहेराकारणसमये गन्धारनगरे चतुर्मासीं तिष्ठासोः सूरेर्गन्धारवर्णनं किंचित्

अथो लाटलक्ष्मीललामायमानं पुरं वार्धितीरेऽस्ति गन्धारनाम ।
किमुद्वेज्यमाना जलैरम्बुराशेः प्रतीरं पुरी संश्रिता शार्ङ्गपाणेः ॥१४६॥

लाटस्य लाडनाम्नो मण्डलस्य लक्ष्म्या ललामायमान तिलकमिवाचरत् वार्धेः समुद्रस्य तीरं तटं तत्र गन्धार इति नाम यस्य तादृशं पुरं नगरमस्ति विद्यते । उत्प्रेक्ष्यते अम्बुराशेः कल्लोलमालिनः प्रसरत्तुङ्गतरङ्गरङ्गविरलजलैरुद्वेज्यमाना अत्युद्वेगं प्राप्यमाना शार्ङ्गपाणेर्नारायणस्य पुरी द्वारका नगरी विष्णोः कुत्रापि गते सति समुद्रेणाप्लाव्य स्वसलिलमध्ये गृहीता; अत एव पानीयोद्वेगात्प्रतीरं तटं संश्रिता पानीयाद्बहिरागत्यात्र स्थितेव ॥

## શ્લોકાર્થ

સમુદ્રના જલવડે ઉદ્વેગ પામીને જાણે વિષ્ણુની નગરી દ્વારિકા, સમુદ્રના તીરે આવીને વસી હોય તેમ લાટદેશની લક્ષ્મીના તિલક સમાન 'ગંધાર' નગર સમુદ્રના કિનારે વિદ્યમાન છે. ॥૧૪૬॥

निधानेशरम्भाकुमारीगणेशान्दधानेन गाङ्गेयराजेश्वरांश्च ।
जिता येन वस्वोकसारा स्वलक्ष्म्या ह्रियेवाश्रिता शंभुशैलस्य मौलिम् ॥१४७॥

गन्धारनगरेण स्वलक्ष्म्या निजवैभवेन जिता परिभूता सती वस्वोकसारा धनदपुरी ह्रियेव त्रपातिरेकादिव शंभुशैलस्य मौलिं मस्तकमुपरितनशिखरमाश्रिता भेजुषी । येन किं कुर्वाणेन । दधानेन । कान् । निधानानां निधीनामीशाः स्वामिनो निधिपतयः तास्तथा रम्भाः कदलीः कुमारीः कन्यकाः तथा गणानां जनसमुदायानामीशा गणनायकास्तान्

तथा गाङ्गेयं स्वर्णं तथा राजेश्वरं देशाधिपतिं राज्यलक्ष्मीवन्तमीश्वरा गजप्रमाणद्रविणधारिणः तान् बिभ्राणेन । अलकापक्षे तु सर्वेऽप्येकैकाः । निधानेशो धनदः; तथा रम्भानाम्नी धनदाङ्गजनलकूबरपत्नी । 'अस्मान्किमश्रोत्रसुधां विधाय रम्भा चिरं भामतुलां नलस्य । तत्रानुरक्ता तमनाप्य भेजे तन्नामगन्धान्नलकूबरं सा ॥' इति नैषधे । कुमारी पार्वती गणेशो विघ्ननायकः गङ्गाया अपत्यं गाङ्गेयः स्वामिकार्तिकः । 'गङ्गोमाः कृत्तिकासुतः' इति हैम्याम् । तथा 'गाङ्गेयो गुहभीष्मयोः' इत्यनेकार्थः । राजानो यक्षाः ईश्वरः शंभुस्तान्बिभ्रती ॥

શ્લોકાર્થઃ

લક્ષ્મીપતિઓ, કદલી, કુમારિકાઓ, ગણુનાયકો, સુવર્ણો, અને રાજેશ્વર આદિથી શોભતી ગાંધારનગરીની લક્ષ્મીથી પરાભવ પામેલી ધનદપુરી (ધનદ, કુબેર, ધનદપુત્ર, નલકુબરની પત્ની રંભા, પાર્વતી, ગણપતિ, કાર્તિકસ્વામિ, અને ઇશ્વર આદિને ધારણ કરતી ધનદપુરી) કુબેરનગરી અલકાપુરી અતિશય લજ્જાથી જ જાણે કૈલાસપર્વતના શિખર ઉપર રહી ન હોય ! ।।૧૪૭।।

स्फूर्त्या मणीकम्बुवराटमुक्तिका प्रवालमातङ्गतुरङ्गमश्रियाम् ।
विहेलितेनाम्बुधिना द्विवेलं वेलाच्छलाद्यन्नगरं न्यषेवि ॥ १४८ ॥

मणयः चन्द्रकान्ताद्याः सामान्येन सर्वजातिजानि रत्नानि कम्बवः शङ्खाः वराटा रत्नमुख्यानि हीरका कपर्दा वा मुक्तिका मुक्ताफलानि । 'वहुकम्बुमणीवराटकागणनाटत्करकर्कटोत्करः' इति नैषधे । हट्टेषु कम्बवोऽपि दृश्यन्ते । प्रवाला विद्रुमा मातङ्गा हस्तिनः तुरङ्गमा अश्वाः श्रीर्धनधान्यादिविविधलक्ष्मीस्तासां स्फूर्त्या अत्युद्धरवैभवभरेण कृत्वा विहेलितेनावगणितेनाभिभूतेनाम्बुधिना समुद्रेण द्वे वेले वारावसरौ यत्र । 'वेला वारावसरः प्रस्तावः' इति हैम्याम् । तथा 'वेला स्याद्वृद्धिरम्भसः' । द्विवेलमिति क्रियाविशेषणम् । वेलाच्छलाज्जलवृद्धिकपटात् । वेलागणमिषेणेत्यर्थः । यन्नगर गन्धारपुरं न्यषेवि उपास्यते स्म । अम्बुधावपि मण्यादयः सर्वेऽपि पदार्थाः सन्ति । ऐरावणोच्चैःश्रवसोस्तत्रोत्पन्नत्वात् जले गजाश्वानां संभवाद्वा ॥

શ્લોકાર્થ

ચંદ્રકાન્ત આદિ સર્વજાતિનાં રત્ન; હીરા, મોતી, પ્રવાલ, હાથી અને અશ્વ આદિના વૈભવથી તિરસ્કૃત બનેલો સમુદ્ર વેલા (ભરતી)નાં બ્હાનાથી બે વખત ગંધાર નગરીની સેવા કરતો હતો. ।।૧૪૮।।

इन्द्रनीलमणिशालिजालकाश्चन्द्रकान्तकृतचन्द्रशालिकाः ।
भूतलाभ्युदयिनो बभासिरे शारदीनशशिमन्डला इव ॥१४९॥

यत्र गन्धारनगरे इन्द्रनीलमणिभिः मरकतादिनीलरत्नैः शालन्ते शोभन्ते इत्येवशीला जालका गवाक्षा यासु तादृश्यः चन्द्रकान्तैश्चन्द्रमणिभिः कृता निर्मिता चन्द्रशालिका अर्थात्सौधानां शिरोगृहाणि उपरितनभूमिका बभासिरे भासन्ते स्मा दीप्यन्ते स्म । उत्प्रेक्ष्यते भूतले महीमण्डले अभ्यागत्योदयन्त्युद्गच्छतीत्येवशीलास्तथा शारदीनाः प्रसरत्पयोधररोधापगमप्रोल्लसत्प्रचुरचन्द्रिकाकलिताः शरत्कालसंबन्धिनीः शशिनामिति सार्थकं नाम कलङ्ककालिमाकलितचन्द्राणां मण्डला बिम्बा इव । मण्डलशब्दस्त्रिषु लिङ्गेषु चन्द्रशालिकासु लक्ष्मसङ्करोन्द्रनीलगवाक्षा ॥ इति गन्धारवर्णनम् ॥

श्लोकार्थ

તે ગંધાર નગરમાં ઈન્દ્રનીલ મણીથી સુશોભિત ગવાક્ષોવાળી, ચન્દ્રકાન્તમણિઓથી નિર્માણ કરાયેલી ચંદ્રશાલાઓ (અગાસીઓ) શોભે છે, તે જાણે ! પૃથ્વીમંડળ ઉપર આવીને ઉદય પામેલા ચંદ્રના બિંબો ન હોય ! ॥૧૪૯॥

महैर्महीयोभिरनेकनागरैः प्रवेशितः सूरिपुरंदरः पुरम् ।
दिग्जैत्रयात्रासु निजानुगीकृतप्रतीपभूमीपतिसार्वभौमवत् ॥१५०॥

अतिशयेन महान्तो महीयांसस्तैर्महीयोभिरत्यधिकैर्महैरुत्सवैः कृत्वानेके गणनातीता नागराः पुरजनास्तैः सूरिपुरंदरो हीरविजयसूरिवासवः पुरं गन्धारनगरं प्रवेशितः पुरे प्रवेशः कारितः । किंवत् । दिशां पूर्वपश्चिमदक्षिणोत्तराणां चतसृणां जैत्रासु जयनशीलासु यात्रासु सेनाभिः समं शात्रवेष्वभिगमोऽभिषेणन तेषु निजस्यात्मनोऽनुगीकृताः सेवकभावं लम्भिताः प्रतीपाः पूर्वं प्रतिकूला विजये कृते च कथंचिदानुकूल्यभाजः भूमीपतयो राजानो येन तादृक् सार्वभौमवत् । यथा चक्रवर्ती महामहैः कृत्वा नागरैर्नगरं प्रवेश्यते ॥

श्लोकार्थ

દિગ્વિજય યાત્રામાં શત્રુરાજાઓને સ્વાધીન કરનારા ચક્રવર્તીનો, જેમ નાગરિકો નગર પ્રવેશ કરાવે તેમ સૂરિપુરંદરનો (હીરવિજયસૂરિનો) ગંધાર નગરના નાગરિકોએ મહામહોત્સવપૂર્વક નગર પ્રવેશ કરાવ્યો. ॥૧૫૦॥

गणकैरविणीरमणः श्रमणैर्बहुभिः सह तत्पुरमध्यवसत् ।
कलभप्रकरैरिव गन्धगजो जलवालकभूधरभूवलयम् ॥१५१॥

श्रमणैः साधुभिः सार्धं गणे तपागच्छे आह्लादकत्वेन कैरविणीनां कुमुदिनीनां रमणः प्राणनाथश्चन्द्रो गच्छनायकः तद्गन्धाराभिधानं नगरमध्यवसत् आश्रयति स्म । गन्धारबन्दिरे तस्थिवानित्यर्थः । क इव । गन्धगज इव यथा कलभैस्त्रिंशद्वर्षैः प्रौढैर्गजबजैरुपलक्षणाद्विंशतिवर्षीयैर्विक्कैः दशवार्षिकैः पोतैः पञ्चवार्षिकैर्बालैः इत्यादिभिर्द्विरदैः समम् । 'पञ्चवर्षो गजो बालः स्यात्पोतो दशवार्षिकः । विक्को विंशतिवर्षः स्यात्कलभस्त्रिंशदब्दकः ॥' इति हैम्याम् । गन्धहस्ती जलवालको विन्ध्यः स एव भूधरः पर्वतस्तस्य भूवलयं वनगहनपृथिवीपीठमधिवसति विन्ध्याद्रिवनखण्डे तिष्ठति । 'विन्ध्यस्तु जलवालकः' इति हैम्याम् ॥

श्लोकार्थ

જેમ ગંધહસ્તિ, કલભ, વિકુ, પોત અને બાલહસ્તિઓના સમુહ સાથે વિન્ધ્યાચલ પર્વતના વનખંડમા રહે છે તેમ તપગચ્છમાં ચન્દ્રસમાન શ્રીહીરવિજયસૂરિ બાલ, યુવાન, વૃદ્ધ આદિ અનેક શ્રમણો સાથે ગંધાર બંદરમાં બિરાજમાન થયા ॥૧૫૧॥

अमरपुरीकृतलज्जे तत्र विजेतुं बलीगृहं समे ।
प्रावृषि दुग्धपयोधौ मधुपरिपन्थीव तस्थौ सः ॥१५२॥

स प्रसिद्धः सूरिः तत्र गन्धारनगरे प्रावृषि वर्षाकाले वार्षिकचतुर्मास्यां तस्थौ तिष्ठति स्म । क इव । मधुपरिपन्थीव । यथा प्रावृट्समये दुग्धपयोधौ क्षीरसमुद्रे मधुनाम्नो दैत्यस्य परिपन्थी शत्रुर्नारायणः तिष्ठति । किंभूते गन्धारपुरे । अमराणां देवानां पुर्या नगर्या अमरावत्याः स्वातिशायिताभ्यधिकवैभवभरैः कृता विहिता लज्जा मन्दाक्षं येन । पुनः किंभूते । बलिगृहं नागलोकं विजेतुं विशेषेण स्वविभवाधिक्येन पराभवितु सज्जे सज्जीभूते ॥ इति गन्धारनगरे हीरसूरेः स्थितिः ॥

શ્લોકાર્થ

જેના વૈભવથી સ્વર્ગપુરી પણ લજ્જિત બની ગઈ છે અને નાગલોકને પણ જીતવા માટે ઉત્સુક બનેલા ગંધાર બંદરમાં હીરવિજયસૂરિ, જેમ મધુનામના દૈત્યના શત્રુ વિષ્ણુ ક્ષીર સમુદ્રમા રહે, તેમ વર્ષાકાળમાં ચાતુર્માસિક સ્થિરતા કરીને રહ્યા. ॥૧૫૨॥

जीविकामिव नभोम्बुपावलेः प्रावृषं पुनरवेत्य पत्तने ।
हीरसूरिपुरुहूतशासनात्तस्थिवान्विजयसेनसूरिराट् ॥१५३॥

विजयसेन इति नाम यस्य तादृशः सूरीणां राट् राजा हीरसूरिपुरुहूतस्य हीरविजयसूरिशक्रस्य शासनादादेशात्पुनरपरार्थे पत्तने अणहिल्लवाटकनगरे तस्थिवान् स्थितः । किं कृत्वा । प्रावृष वर्षासमयमुपेतमवेत्य ज्ञात्वा । प्रावृष कामिव । नभोम्बुपानां चातकानामावलेः पङ्क्तेः जीविका जीवनवृत्तिमिव ।

श्लोकार्थ

ચાતકોની આજીવિકા સમાન વર્ષાકાળને જાણીને શ્રીવિજયસેનસૂરિ, શ્રીહીરવિજયસૂરિની આજ્ઞાથી, અણહિલ્લપુર પાટણમાં ચાતુર્માસિક સ્થિરતા કરીને રહ્યા. ॥૧૫૩॥

प्रीणन्प्राणिनभोम्बुपान्प्रविदधद्दुर्वादिनां दुर्दिनं
बोधाङ्कुरकरम्बितां विरजसं कुर्वश्च चित्तक्षितिम् ।
आनन्दं ददते स्म विस्मयकरीं व्याहारधारां किर-
न्भूमौ सूरिपुरंदरो जलधरो जम्भारिमार्गे पुनः ॥१५४॥

भूमौ महीमण्डले सूरिपुरंदरो हीरविजयसूरीन्द्रः अथ च सूरिरेव पुरंदरो मेघः । यदुक्तम् 'एक एव खगो मानी चिरं जीवतु चातकः । पिपासितो वा म्रियते याचते वा पुरंदरम् ॥' इति । पुनर्जम्भारिमार्गे शक्रपक्षतौ आकाशे । यथा देवमार्गस्तथा देवेन्द्रमार्गोऽपि । तथा 'येनामुना बहुविगाढसुरेश्वरा ध्व राज्याभिषेकविकसन्महसा बभूवे' इति नैषधेऽपि । जलधरो मेघ आनन्दं जनानां प्रमोदं ददते स्म । 'दद दाने' भ्वादिरात्मनेपदी च । किं कुर्वन् । प्राणिनो जन्तव एव नभोम्बुपा बप्पीहास्तान् प्रीणन् तर्पयन् तृप्तिमुत्पादयन् तेषाम् । पुनः किंभूतः । दुर्वादिनां परवादिनां मिथ्यादृशां दुर्दिनं दुष्टदिवसं पराजयगोचरीकृतत्वान्मेघान्धकारं च प्रविदधत् प्रकर्षेण कुर्वन् । पुनः किंभूतः । बोधस्तत्त्वज्ञानं सम्यक्त्वं वा तदेवाङ्कुरः प्ररोह' । अथ वा बहुवचनम् । बहुजनापेक्षया तत्त्वज्ञानानि सम्यक्त्वानि च त एवाङ्कुरास्तैः करम्बितां व्याप्तामत एव विरजसं विगतरजस्कां पापधूलीभ्यां रहितां चित्तक्षितिं मनोमेदिनीं कुर्वन् सृजन् । पुनः किंभूतः । विश्वेषां जगज्जनानां विस्मयकरीमाश्चर्योत्पादिकाम् । व्याहारा एव वाग्विलासा एव धारा ममृतवृष्टिं किरन्विस्तारयन् ॥

શ્લોકાર્થ

ચાતકરૂપી ભવ્યપ્રાણીઓને ખૂશ કરતા, દુષ્ટવાદીઓના પરાભવરૂપી દુર્દિન કરતા, બોધિબીજ રૂપી અંકુરથી વ્યાપ્ત કરતા અને ચિત્તરૂપી પૃથ્વીને પાપરૂપી રજ વિનાની કરતા શ્રી હીરવિજયસૂરિ, આકાશમા જેમ મેઘ વર્ષા કરીને આનન્દ આપે છે તેમ પૃથ્વી પર વાક્ધારારૂપી (વાણીરૂપી) આશ્ચર્યકારી વૃષ્ટિ કરતા મેઘની જેમ જીવોને આનન્દ આપતા હતા. ॥૧૫૪॥

भवसलिलनिधेरिवैकसेतुं विधिमवलम्ब्य तदागमप्रणीतम् ।
घनसमयदिनान्दिनेश्वरश्रीर्गमयामास मुनीश्वरः क्रमेण ॥१५५॥

तदा तस्मिन् प्रावृट्समये मुनीश्वरो हीरविजयसूरि॰ क्रमेण पर्युषणादिपरिपाट्या घनसमयदिनान्प्रावृषेण्यवासरान् गमयामासातिक्रामति स्म । किंभूतः । दिनेश्वरश्रीः सूर्यवत्तेजोलक्ष्मीर्यस्य । किं कृत्वा । आगमे सिद्धान्ते उघनिर्युक्तियदिनचर्यादिशास्त्रे वा प्रणीतं प्रोक्तं विधिं चातुर्मासिकसाधुसंबन्धिविविधक्रियानुष्ठानादिकमवलम्ब्याश्रित्य । उत्प्रेक्ष्यते भवः संसार एवानन्तत्वादद्दग्गोचरपारत्वात्सलिलनिधिः समुद्रस्तस्य तत्र वा एकमद्वितीयं सेतुमिव । पद्यापाज इति जनप्रसिद्धाभिधानम् ॥

શ્લોકાર્થ

સંસારરૂપી સમુદ્રમાં સેતુ સમાન આગમોક્ત વિધિ મુજબ સૂર્ય સમાન તેજસ્વી શ્રી હીરવિજયસૂરિએ અનુક્રમે ચાતુર્માસિક દિવસો પસાર કર્યા. ॥૧૫૫॥

यं प्रासूत शिवाह्वसाधुमघवा सौभाग्यदेवी पुनः
पुत्रं कोविदसीहसीहविमलान्तेवासिनामग्रिमम् ।
सर्गोऽसौ नवमोऽत्र देवविमलव्यावर्णिते हीरयु-
क्सौभाग्याभिधहीरसूरिचरिते संपूर्णता प्राप्तवान् ॥१५६॥

अत्र हीरसौभाग्यकाव्ये असौ अयमेव यो लिपेर्गोचरीकृतः । नवानां संख्यापूरणो नवमः सर्गः अधिकारविशेषः संपूर्णतां प्राप्तवान् संपूर्णो बभूव ॥

इति पण्डितसीहविमलगणिशिष्यपण्डितदेवविमलविरचितायां स्वोपज्ञहीरसौभाग्यमहाकाव्यवृत्तौ शासनदेवीप्रकटीभवन गुरुप्रश्न तदुत्तर स्वस्थानगमन चन्द्रतारातमस्तमीविरामदिनकरोदयविजयसेनसूरिसूरिपद मेघजीऋषिसमागमन गन्धारनगरादिवर्णनो नाम नवमः सर्गः ।

શ્લોકાર્થ

વણિક્કુલમાં ઈન્દ્રસમાન શિવ નામના શ્રેષ્ઠિ અને સૌભાગ્યદેવીના જન્મજાત સુપુત્ર દેવવિમલગણી કે જેઓ નિરંતર સરસ્વતીદેવીની ઉપાસનામાં તત્પર હતા, અને સર્વમુનિઓમા સિંહ સમાન સિંહવિમલગણીના પ્રથમ શિષ્યરૂપે પ્રસિદ્ધ હતા, તે દેવવિમલગણીએ જેમાં જગદ્ગુરુ શ્રી હીરવિજયસૂરિનું સવિસ્તર જીવન વૃત્તાંત આવે છે એવા "હીરસૌભાગ્ય" નામના મહાકાવ્યની સ્વોપજ્ઞ ટીકા સહિત રચના કરી. તે આ મહાકાવ્યનો, શાસનદેવીના પ્રત્યક્ષ થવાથી આરંભીને ગંધારનગરનાં વર્ણન પર્યંતનો આ નવમો સર્ગ સમાપ્ત થયો. ॥૧૫૬॥

卐 નવમઃ સર્ગઃ સમાપ્તઃ 卐

卐

* दशमः सर्गः *

निःशेषदेशककुदं भुवि भाति दिल्ली–
देशोऽथ केलिनिलयो नलिनालयायाः ।
नामीभुवा भुजगनिर्जरसद्मसार–
मादाय निर्मित इवैप खनिः सुखानाम् ॥ १ ॥

अथ अकब्बरपातिसाहिमिलनादिप्रारम्भणे भुवि पृथिव्यां गुर्जरजनपदापेक्षया पूर्वस्यां दिशि दिल्लीदेशो मेवातनाममण्डलो दिल्लीमण्डल इत्यप्यभिधा भाति शोभते । किल-

क्षणः । निःशेषाणां समस्तानां देशानां जनपदानां ककुदं प्रधानः । 'ककुदं तु प्रधानेंऽसे वृषाङ्के राजलक्ष्मणि' इत्यनेकार्थतिलके पुनः किंभूतः । नलिने कमले आलयं सदनं यस्यास्तस्याः श्रियः केलये क्रीडार्थं निलयः सौधम् । उत्प्रेक्ष्यते नाभीभुवा नारायणनाभ्यम्भोजजन्मना ब्रह्मणा भुजगनिर्जरसद्मनोर्नागलोकस्वर्गयोः सारं सम्यग्दलिकपटलीमादाय गृहीत्वा सुखानां सर्वशर्मणां खनिराकरः । एष देशो निर्मितः कृत इव ॥

## અથ દશમઃ સર્ગઃ

### શ્લોકાર્થ

કમલમાં જેનું સ્થાન છે તેવી લક્ષ્મીદેવીનું જાણે ક્રીડામંદિર હોય અથવા બ્રહ્માએ સ્વર્ગ અને પાતાલ લોકનાં સારભૂત શ્રેષ્ઠ તત્ત્વો લઈને સુખની ખાણરૂપ એવા આ દીલ્હી દેશનું નિર્માણ કર્યું હોય તેવો દિલ્હી નામનો દેશ, ગુજરાતની પૂર્વદિશામાં સમસ્ત દેશોમાં શ્રેષ્ઠરૂપે શોભે છે, ॥ ૧ ॥

यस्मिन्विभाति भगिनी तपनाङ्गजस्य
रङ्गत्तरङ्गशिखरोन्मथितारविन्दा ।
देशश्रियः किमपि निर्गलितोत्तरीया
वेणी विभूषणवतीव परिस्फुरन्ती ॥ २ ॥

यस्मिन्दिल्लीमण्डले तपनस्य भानोरङ्गजो नन्दनो धर्मराजस्तस्य भगिनी जामिर्यमुना यमभगिनी । 'कालिन्दी सूर्यजा यमी' इति हैम्याम् । किंभूता । रङ्गन्तश्चलन्तो ये तरङ्गाः कल्लोलास्तेषां शिखराण्यग्राणि तेषून्मथितानि विकासितानि अरविन्दानि पद्मानि यस्याम् । उत्प्रेक्ष्यते देशश्रियः दिल्लीमण्डललक्ष्म्याः किमपि कथमपि केनापि प्रकारेण निर्गलितं क्वापि निपतितं उत्तरीयमुपरितनच्छादननिवसनं यस्यां तादृशी परिस्फुरन्ती दृग्गोचरीभवन्ती प्रत्यक्षलक्ष्या वेणी कबरीव । किंभूता । विभूषणवती चूडामण्यादिमस्तकाभरणभरविभ्राजिनी ॥

### શ્લોકાર્થ

દિલ્હીમાં જેના ઉછળતા તરંગોના અગ્રભાગે વિકસ્વર કમલો રહેલાં છે, તેવી સૂર્યપુત્ર યમરાજની ભગિની "યમુના" વહે છે ! તે જાણે કોઈપણ રીતે જેનું ઉત્તરીય વસ્ત્ર (ઓઢણું) સરકી પડયું છે તેવી દેશલક્ષ્મીની આભૂષણ સહિત વેણી ન હોય !॥૨॥

उत्तानलक्र इव वक्त्रकजं कुशाद्या-
वर्ते विभूषयति मध्यमहीममुष्य ।
उत्पत्तिमाकलयतो ददतोऽङ्गिकामा-
न्क्षीरार्णवे क्रतुभुजामिव पादपस्य ॥ ३ ॥

आसेदुषीभिरवने विदुषीभिरिक्षु-
च्छायासु यत्नवकुटुम्बिवनस्तनीभिः ।
कीर्तिर्जगज्जयिरतीशजयोर्जितेव
राजीमतीशितुरगीयत गीतिरुच्चैः ॥ ४ ॥ (युग्मम्)

यस्य दिल्लीमण्डलस्य नवाभिस्तरुणीभिः कुटुम्बिनां कर्षुकाणां घनस्तनीभिः पीनपयोधराभिः अथ वा वटल्लनीभिः जम्भवत्कुचौ यासामित्युन्नतस्तनीभिः वनिताभिर्गीतिर्गानमुच्चैः सातिशायिमधुरध्वनिनागीयत जगे गीता । किंभूताभिः । इक्षूणां रसालानां छायासु निरातपस्थानेषु आसेदुषीभिरुपविष्टाभिः । इत्थं किम् । अवने इक्षुक्षेत्ररक्षणे विदुषीभिर्निपुणाभिः । उत्प्रेक्ष्यते जयन्ति त्रीणि भुवनानि । सुरासुरनरानित्यर्थः । जयतीत्येवंशीलस्य रतीशस्य मन्मथस्य जयेन पराभवेन क्षौदेनामूर्छोर्जिता स्वीकृता राजीमतीशितुः श्री नेमिनाथस्य कीर्तिरेवागीयत । राजीमतीशितुः किं कुर्वतः । कुश इति पदमाद्य यत्र तादृशे आवर्ते । कुशावर्ते देशे इत्यर्थः । उत्पत्तिं जन्म आकलयतः दधतः प्राप्नुवतः । कस्येव । पादपस्येव । यथा क्रतुभुजां देवानां पादपः पारिजातनामा कल्पद्रुमः क्षीरार्णवे दुग्धपयोधौ उत्पत्तिमाकलयति । पुनः किंभूतस्य । स्वर्द्रुमवदङ्गिनां प्राणिनां भविकानां कामानभिलाषान्ददतः यच्छतः । अथ वा । क्षीरार्णवे कल्पवृक्षस्येव कुशावर्तजनपदे जन्माकलयतः । कुशावर्ते किं कुर्वति । वक्त्रकज वदनारविन्द उत्तानमुन्नत नक्र नासिका तस्मिन्निव । अमुष्य दिल्लीमण्डलस्य मध्यमहीमन्तरालभूमौ विभूषयति शोभां लम्भयति । मेवातमण्डलमध्ये श्रीनेमिनाथजन्मस्थान कुशावर्तदेशोऽस्तित्यर्थः ॥ युग्मम् ॥

### શ્લોકાર્થ

ઇક્ષુનાં ખેતરોનુ રક્ષણ કરવામા ચતુર, વૃક્ષોની છાયામાં બેઠેલી અને ઉન્નત સ્તનવાળી ખેડૂત યૌવનાઓ મધુર સ્વરે ગીતો ગાતી હતી ક્ષીરસમુદ્રમાં ઉત્પત્તિવાળા અને પ્રાણીઓને ઇચ્છિત આપનારા કલ્પવૃક્ષોની જેમ-મુખકમલને જેમ નાસિકા શોભાવે તેમ દિલ્હી દેશની મધ્યભૂમિ શોભાવતા 'કુશાવર્ત' નામનાં દેશમા જન્મેલા અને

ત્રિજગત વિજેતા, કામદેવનો પરાભવ કરનારા રાજિમતી ભર્તાર શ્રી નેમિનાથ ભગવાનની કીર્તિને જાણે ગાતી હતી! (તે ખેડૂત-યૌવનાઓ) ॥૩॥ ॥૪॥

संसेवितो द्विरसनैरसुराश्रयश्च ख्यातो रसातलतया नरकानुषङ्गी ।
एतद्विगानमपनेतुमिदंमिषेण वासो व्यधायि किमु भोगिगृहेण भूमौ ॥ ५ ॥

भोगिगृहेण नागलोकेन इदंमिषेण अस्य दिल्लीदेशस्य दम्भेन कपटेन भूमौ महीमण्डले वासः स्थितिर्व्यधायि विहिता । उत्प्रेक्ष्यते एतदिहैव जनैरभिधीयमानमीदृशं वा विगानमपवादमपनेतुं निवारितुमिव । एतत्किम् । यदसौ भोगिगृहो द्विरसनैर्भुजङ्गैः खलैश्च संसेवित आश्रितः । च पुनरसुराणां दैत्यानामाश्रयः स्थानम् । 'असुरा दितिदनुजाः पातालौकःसुरारयः' इति हैम्याम् । पुनः रसातलमित्यनिष्टवाक्यम् । धनपालोऽप्याह 'रसातलं यातु यदत्र पौरुषम्' इति । तत्त्वेन ख्यातः प्रथितः पुनर्नरकस्य नाम्नोऽसुरविशेषस्य । सप्तनरकानां दुर्गतीनामनुषङ्गः मिलनं यस्य ॥

શ્લોકાર્થ

દિલ્હી દેશનાં બ્હાને નાગલોકે પૃથ્વી ઉપર વાસ કર્યો (અર્થાત્ દિલ્હીદેશ નાગલોક જેવો સુંદર હતો) શા માટે? નાગો વડે અથવા ખલપુરુષોથી આશ્રિત, દૈત્યોનું આલયસ્થાન, 'રસાતલ' એવા અનિષ્ટ શબ્દથી પ્રસિદ્ધ, 'નરક' નામનો દૈત્ય અથવા જેમા સાતે નરકો છે, તેથી લોકોની નિંદ્રા દૂર કરવા માટે જાણે નાગલોકે ભૂમિ ઉપર આવીને આશ્રય ન કર્યો હોય! ॥ ૫ ॥

तन्निर्जयोद्यतनिजस्य भयादवेत्य यातं प्रणश्य बलिसद्म तलेऽचलायाः ।
पृष्ठे विलग्न इव तं विजिगीषुरेष स्वर्गः क्षितावुपजगाम मिषादमुष्य ॥ ६ ॥

तद्विजिगीषुस्तद्बलेः सद्म नागलोकं विचेतुमिच्छुः पराभवनशीलः । अत एव पृष्ठे पश्चाद्विलग्नः अमुष्य दिल्लीदेशस्य मिषाद्व्याजात् । उत्प्रेक्ष्येते एष प्रत्यक्षः स्वर्गो देवलोकः क्षितौ क्षोणीमण्डले उपजगाम समागतः । किं कृत्वा । तस्य बलिसद्मनो निर्जये परिभवनविधाने उद्यतस्य उद्यमं विनिर्मिमाणस्य उत्सुकस्य वा । निजस्यात्मनो भयादर्थात्स्वर्गस्य भीतेरचलायाः पृथिव्यास्तले अधस्ताद्भागे प्रणश्य यातं प्रतिभ्रष्टं बलिसद्म नागलोकमवेत्य विज्ञाय । पूर्वं हि बलिसद्म भूलोकस्वर्लोकयोरुपरिष्टादासीत् इति कविसमयः ।

યદુક્તં નૈષધે 'વલિસદ્મ દિવં સ તથ્યવાગુપરિ સ્માહ દિવોઽપિ નારદઃ' ઇતિ । પશ્ચાદ્-ધૈતવિભૂતિજાતાવલવત્તયા ક્રતુભુજાં ભુવનેનાભિભૂતં ભૂતલે ગતમિત્યર્થઃ ॥

શ્લોકાર્થ:

તેમનો પરાજય કરવા માટે ઉદ્ધત થયેલા સ્વર્ગલોકના અતિશય ભયથી નાસીને પૃથ્વીતલમાં જતા નાગલોકને જાણીને, નાગલોકનો પરાભવ કરવા માટે દિલ્હીદેશનાં બ્હાને જાણે સ્વર્ગલોક પૃથ્વી પર આવ્યો ન હોય? (દિલ્હીદેશ જાણે પ્રત્યક્ષ દેવલોક જ ભૂમી પર આવેલો ન હોય તેવો હતો). ॥ ૬ ॥

યઃ પદ્મનન્દન ઇવાસ્તિ હિરણ્યગર્ભો
રમ્યાપ્સરા હરિરિવાચ્યુતવત્સલક્ષ્મીઃ ।
રત્નાકરોઽમ્બુધિરિવારિરિવાત્મયોને-
ર્દુર્ગાન્વિતઃ પવિરિવાસહજૈરજેય· ॥ ૭ ॥

યો દેશઃ પદ્મનન્દનો વિરઞ્ચિરિવ । 'પદ્મનન્દનસુતારિરંસુતા' ઇતિ નૈષધે। હિરણ્યં સુવર્ણં ગર્ભે મધ્યે યસ્ય । આકરાદૌ સ્વર્ણાનાં સદ્ભાવાત્, કનકભૃત્કલશાનાં ભૂમિગર્ભેષુ સ્થાયિત્વાદ્વા, સુવર્ણાદીનિ ગર્ભે મધ્યે યસ્ય વ્યવહારિણાં સૌધેષુ પરઃશતપરોલક્ષપરઃકોટિહિરણ્યદર્શનાદ્વા । બ્રહ્મણસ્તુ કેવલં નામૈવ । 'હિરણ્યગર્ભો લોકેશો નાભિપદ્માત્મભૂરપિ' ઇતિ હૈમ્યામ્ । અસ્તિ વિદ્યતે । પુનર્યો હરિરિવ ઇન્દ્ર ઇવ । રમ્યાણિ કમલાકરસદ્ભાવાન્મનોજ્ઞાનિ અત એવાત્પ્રધાનાનિ સરાંસિ તટાકા યત્ર । હરિસ્તુ રમ્યા રન્તું યોગ્યા કલાકેલિકલાભિર્વિલસિતુમુચિતા' । રમણાર્હા ઇત્યર્થઃ । અપ્સરસો રમ્ભા-તિલોત્તમા-ઘૃતાચીમેનકાપ્રભૃતયઃ સ્વર્વનિતાઃ યસ્ય । પુનર્યોઽચ્યુતવન્નારાયણ ઇવ સહ લક્ષ્મ્યા ધનધાન્યાદિવિભવેન શોભયા વા વર્તતે સઃ । 'સમાસાન્તવિધેરનિત્યત્વાત્કપ્રત્યયાભાવઃ' કૃષ્ણસ્તુ શ્રિયા પત્ન્યા સહિતઃ । પુનર્યોઽમ્બુધિઃ પારાવારઃ ઇવ રત્નાનાં પ્રશસ્તવસ્તૂનાં રત્નપુરુષાણાં નેમિનાથકૃષ્ણવલભદ્રાદીનાં મહાપુરુષાણામાકર ઉત્પત્તિસ્થાનમ્ । સમુદ્રોઽપિ રત્નાકરઃ । પુનર્યો દેશઃ આત્મયોનેઃ સ્મરસ્ય અરિઃ શંભુરિવ દુર્ગૈસ્ત્રિકોટ્ટૈરન્વિતઃ । શિવસ્તુ દુર્ગયા પાર્વત્યા પત્ન્યા યુક્તઃ । અર્ધાઙ્ગભાજિત્વાત્ । પુનર્યઃ પવિરિવ વજ્રવદસહજૈઃ શત્રુભિરજેયો જેતુમશક્યો વૈરિભિરગ્રાહ્યઃ । વજ્રં તુ દુર્ભેદ્યં ગિરિષ્વપ્યકુણ્ઠત્વાત્, સુરાસુરાણાં દુર્જયત્વાદ્વા ॥ ઇતિ દિલ્લીદેશઃ ॥

શ્લોકાર્થ

દિલ્હીદેશ હિરણ્યગર્ભા જેવો છે ! અર્થાત્ જે દેશની ભૂમિમાં સુવર્ણોથી ભરેલા કલશો છે, અથવા સુવર્ણની ખાણો છે, અથવા શ્રેષ્ઠીઓના ગૃહોમાં લાખો-કોડો

સૌનેયા રહેલા છે. અથવા (૧) જેમ ઇંદ્ર રંભા, તિલોત્તમા આદિ અપ્સરાઓથી યુક્ત છે તેમ આ દેશ મનોહર સરોવરોથી યુક્ત છે. (૨) જેમ વિષ્ણુ લક્ષ્મી સહિત છે તેમ આ દેશ પણ ધનધન્યાદિ લક્ષ્મીવાળો છે. (૩) સમુદ્ર રત્નોની ખાણુ છે તેમ આ દેશ પણ નેમિનાથ, બલદેવ, કૃષ્ણ આદિ મહાપુરુષોરૂપી રત્નોની ખાણુ છે (૪) ઇશ્વર (શંકર) પાર્વતી સહિત છે તેમ આ દેશ પણ પર્વતોના કિલ્લાઓથી યુક્ત છે (૫) જેમ વજ્ર દેવદાનવો વડે દૂર્જેય છે તેમ આ દેશ પણ શત્રુઓથી અભેદ્ય-દૂર્જેય છે ! ॥૭॥

दिल्लीति तत्र नगरी न गरीयसीभिः
श्रीभिः क्वचिद्विरहिता रहिता न नीत्या ।
रेजे गिरीशगिरिशृङ्गकृतैस्तपोभिः
प्राप्ता परां श्रियमसौ त्रिशिरः पुरीव ॥८॥

तत्र तस्मिन्मण्डले दिल्ली इति नाम्नी नगरी पुरी अस्ति । किंभूता । गरीयसीभिः अतिमहतीभिः श्रीभिर्लक्ष्मीभिः क्वचित्कुत्रापि स्थाने न विरहिता न वियुक्ता । पुनः किंभूता । नीत्या न्यायेन न रहिता न वियुक्ता । 'रीत्या' इति पाठे रीत्या मर्यादया उत्तमकुलधाचारेण व्यवहारेण वा । उत्प्रेक्ष्यते गिरीशस्य शंभोः गिरेः कैलासस्य शृङ्गे शिखरे कृतैः स्वस्थित्या विहितैर्निरशनपानादिकष्टतपोभिः कृत्वा परां प्रकृष्टां सर्वोत्कृष्टां वा श्रियं लक्ष्मीं शोभां वा प्राप्ता असौ दिल्ली त्रिशिरसो वैश्रवणस्य पुरी नगरी अलकेव ॥

શ્લોકાર્થ

દિલ્હી દેશમાં ' દિલ્હી ' નામની નગરીનું કોઈપણ સ્થાન સર્વોત્કૃષ્ટ લક્ષ્મી અને ન્યાયનીતિથી રહિત ન હતું. અર્થાત્ લક્ષ્મી અને ઉત્તમ કુલાચારોથી નગરી યુક્ત હતી. જાણે કૈલાસ પર્વતનાં શિખર ઉપર શંકરે તપશ્ચર્યા કરવાથી સર્વોત્કૃષ્ટ લક્ષ્મીને પામેલી વૈશ્રવણની નગરી ' અલકા ' ન હોય ! ॥૮॥

दम्भोलिपाणिनगरीविभवाभिभाव-
प्रागल्भ्यमाकलयता निजवैभवेन ।
निर्जित्य या बलिगृहं पदमस्य मौलौ
कालीव कासरसुरासहजं ससर्ज ॥ ९ ॥

या दिल्लीपुरी निजवैभवेन आत्मीयाद्धितलक्ष्म्या । 'स्फुरन्माञ्जिष्ठवैभवः' इति काव्यक०

स्खलतायाम् । बलिगृह नागलोकं निर्जित्य पराभूय अस्य बलिगृहस्य मौलौ मस्तके पदं चरणं स्थानं ससर्ज सृजति स्म । किंभूतेन वैभवेन । दम्भोलिर्वज्रं पाणौ हस्ते यस्य स तस्य सहस्रनेत्रस्य नगर्या अमरावत्या विभवस्य अभिभवनमभिभावस्तत्र प्रागल्भ्यं प्रतिभा-वतां चातुर्यमुद्यमसुत्साहं वा आकलयता बिभ्रता पदं चक्रे । केव । कालीव । यथा पार्वती कासरनामानं सुराणां देवानामसहजं विरोधिनं स्वस्यात्मनो विभोर्भावो वैभवम् । अत्र भावेऽण् । तेन वैभवेन सामर्थ्येन महत्त्वेन वा । 'स्तोत्रं सुविस्तृतमतिर्न विभुर्विधातुम्' इति कल्याणमन्दिरस्तवे । 'विभुः समर्थः' इति तद्वृत्तिः । बलिगृह पाताल निर्जित्य जित्वा अस्य महिषासुरस्य मौलौ मस्तके पदं स्वचरणं चकार । तन्मूर्तेस्तत्प्रकारदर्शनात् ॥ इति दिल्ली ॥

શ્લોકાર્થ

જેમ પાર્વતી 'મહિષાસુર' નામનાં દૈત્યને તિરસ્કાર કરીને તેના મસ્તક ઉપર ચરણુ સ્થાપન કરીને રહી છે તેમ આ દિલ્હી નગરી પોતાનાં વૈભવથી ઈન્દ્રપુરી અમરાવતીનો તિરસ્કાર કરીને પ્રગલ્ભતા ધારણુ કરતી હવે પોતાનાં વૈભવથી પાતાલલોકને જીતીને તેનાં મસ્તક ઉપર પગમૂકીને જાણે રહી ન હોય ! ॥૯॥

तस्यां महीहिमकरेण हमाँउनाम्ना
जज्ञे पुरंदरविजित्वरविक्रमेण ।
यस्यौजसेव विजितेन पदं मुरारे-
रात्तुल्यतां स्पृहयतांशुमता न्यषेवि ॥ १० ॥

तस्यां दिल्लीनगर्यां हमाँउ इति नाम यस्येति तेन हमाँउनाम्ना महीहिमकरेण क्षोणी-रोहिणीरमणेन जज्ञे संजातम् । किंभूतेन । पुरंदरस्य वासवस्य विजित्वरो विशेषेण जय-नशीलो विक्रमो बलं यस्य तेन । यस्य हमाँउपातिसाहेरोजसा प्रतापेन विजितेनाभिभूतेन स्मा । पुनस्तस्य हमाँउप्रतापस्य तुल्यतां सादृश्यं स्पृहयता इच्छता अंशुमता सूर्येण । उत्प्रेक्ष्यते मुरारेर्नारायणस्य पदं चरणं विष्णुपद न्यषेवि सेव्यते स्म इव ॥

શ્લોકાર્થ

તે દિલ્હી નગરીમાં ઈન્દ્રના પરાક્રમને પણ જીતી લે તેવો પરાક્રમી હુમાંઉ (હુમાયુ) નામનો રાજા હતો. તે હુમાંઉના પ્રતાપથી પરાભવ પામેલો સૂર્ય તેની તુલ્યતા પ્રાપ્ત કરવા માટે જાણે હજુપણ આકાશની ઉપાસના કરતો રહ્યો છે ! ॥૧૦॥

श्रीकाबिलाधिपतिबब्बरपातिसाहि-
पुत्रः पुलोमदमनोऽखिलमुद्गलानाम् ।
सूरस्य सूनुमपि निर्मितवान्सदण्डं
कालं करालमपि यः प्रसरत्प्रतापैः ॥ ११

यो हमाँउपातिसाहिः अभिषेणनेन विनैव प्रसरद्भिर्जगद्व्यापकैर्दशदिक्षु विस्तृतैः प्रतापैः स्वतेजोभिरेव शूरस्य श्लेषचित्रयोः सकारशकारयोरभेदात् भास्करस्य सूनुं नन्दनम् । 'प्रेतात्पतिर्दण्डधरोऽर्कसूनुः' इति हैम्याम् । सुभटस्याङ्गजातमपि करालं मृत्युत्वेन विविधायुधधारकत्वेन भीषणं परेषां भयोत्पादकं कालं कृतान्तं कालवर्णमपि सदण्डं वेत्रिणम् । 'छडीदार' इति प्रसिद्धम् । राजदेयांशयुतं दण्डदायिनमित्यर्थः । निर्मितवान्विधत्ते स्म । केवलं स्वौजसैव, न पुनरभिषेणनादिना सदण्डं विहितवानित्यर्थः । किंभूतः । श्रिया सेनादिविभवेन कलितो यः काबिल इति नाम्ना मुद्गलानां मण्डलो देशविशेषस्तस्याधिपतिः स्वामि यो बब्बरपातिसाहिस्तस्य पुत्रो नन्दनः । पुनः किंभूत । अखिलानां मुद्गलानां यवनजातिविशेषाणां म्लेच्छनां पुलोमनाम्नो दानवविशेषस्य दमनो व्यापादकः शक्रः । मुद्गलेन्द्र इत्यर्थः ॥ इति हमाँउपातिसाहिः ॥

श्लोकार्थ

કાબુલ દેશના અધિપતિ 'બબ્બર' નામના પાદશાહનો પુત્ર હુમાયુ બાદશાહ પોતાના પ્રતાપથી સમસ્ત મલેચ્છ જાતિરૂપ 'પુલોમ' નામના દૈત્યનો નાશ કરવા માટે જાણે ઇંદ્ર સમાન બન્યો હતો. તેણે પોતાનાં વિશ્વવ્યાપી પ્રતાપ વડે સૂર્યપુત્ર યમરાજને, ભયંકર હોવા છતાં પણ જાણે તેને પોતાનો છડીદાર બનાવ્યો હતો. ॥૧૧॥

तस्याङ्गजोऽभवदकब्बरभूमिभास्वा-न्भूपालमौलिमणिचुम्बितपादपद्मः ।
शौरेरिवाम्बुधिशयो भुजपञ्जरान्त-र्विश्रान्तवार्धिवसनाजयराजहंसः ॥ १२ ॥

तस्य हमाँउसाहेरकब्बर इति नाम्ना भूमिभास्वान् परतेजस्तिरस्कारिप्रतापवत्त्वादद्वैतत्वाच्च क्षोणीसहस्ररश्मिरभवत् । 'मध्य दिनाब्धिविधेर्वसुधाविवस्वान्' इति नैषधे । क इव । अम्बुधिशय इव । यथा शौरेर्वसुदेवस्य कृष्णः पुत्रो बभूव । किंलक्षणः । भूपालानां महानृपाणां मौलीनां मुकुटानां मणीभिर्माणिक्यैश्चुम्बितमाश्लिष्य समालीढं पादपद्मं चरणकमलं यस्य । पुनः किंलक्षणः । भुजौ स्वबाहू इव पञ्जरं पक्षिरक्षणस्थानं तस्यान्तर्मध्ये विश्रान्तो विश्रामाय स्थितो वार्धिः समुद्रो वसनं वस्त्रं यस्याः एतावता आचतुःसमुद्रान्तपृथिव्या जयः स्वायत्तीकरणं स एव राजहंसो यस्य सः ॥

### શ્લોકાર્થ

જેમ વસુદેવને કૃષ્ણપુત્ર હતો તેમ તે હુમાઉ બાદશાહનો અકબર નામનો તેજસ્વી પુત્ર હતો. તે પોતાના પ્રતાપથી જાણે પૃથ્વીનો સૂર્ય ન હોય ! જેનાં ચરણ-કમલે અનેક રાજાઓનાં મુગટ સ્પર્શતા હતાં, જેનાં ભુજારૂપી પિંજરામાં સમુદ્રરૂપીવસ્ત્ર વિશ્રાંતિ કરીને રહેલું હતું, અર્થાત સમુદ્રપર્યંતની પૃથ્વીનાં જયરૂપી રાજહંસ સમાન તેજસ્વી ' અકબર' નામનો પુત્ર હતો. (હુમાયુનો) ॥૧૨॥

साम्राज्यमप्यधिगतो निखिलस्य नाक-लोकस्य लोलुपतया पुनरीहमानः ।
भोक्तुं समग्रमपि मध्यमलोकमेत-द्व्याजादुवास मघवेव वसुंधरायाम् ॥ १३ ॥

एतद्व्याजादकब्बरसाहिकपटात् । उत्प्रेक्ष्यते वसुंधरायां विश्वंभरावलये मघवा शक्र इवोवास वसति स्म । किंभूतः । निखिलस्य समस्तस्यापि नाकलोकस्य स्वर्गस्य साम्राज्य-माधिपत्यम् । 'सम्राट् तु चास्ति यो नृपान्' इति हैम्याम् । अतः सर्वेषामपि विमानाधि-पतिनाकिनायकानामैश्वर्यमधिगतः प्राप्तोऽपि । 'अधिगतं विधिवद्यदपालयत्' इति रघुवंशे । 'अधिगतं प्राप्तम्' इति तद्वृत्तिः । पुनर्लोलुपतया अधिकाधिकसंपदैश्वर्यस्पृहयालुतया समग्रं समस्तमपि मध्यमलोक पातालदेवलोकयोरध उपरि च वर्तमानयोर्मध्येऽन्तराले वर्तिन लोकं भुवनं मध्यमलोक सकलसमुद्रमेखलामण्डलं भोक्तुं स्वभोगविषय विधातुमीहमानो वाञ्छन्निवेति गर्भितोत्प्रेक्षा ॥

### શ્લોકાર્થ

અકબર બાદશાહના બ્હાને પૃથ્વી ઉપર ઇન્દ્ર આવીને રહ્યો હતો. સમસ્ત દેવલોકનાં સામ્રાજ્યનું આધિપત્ય પ્રાપ્ત થવા છતા પણ અધિકાધિક સંપત્તિની લોલુપતાથી હવે સમગ્ર મધ્યલોકને ભોગવવાની ઈચ્છાથી જાણે આવીને રહ્યો ન હોય ! ॥૧૩॥

अथास्य दिग्विजयविधित्सया प्रस्थाने वैरिणामुत्पाताविर्भावः

यात्रासु यस्य चतुरङ्गचमूप्रचार-प्रोद्भूतधूलिपटलैः परितः प्रसस्त्रे ।
प्रस्थानमस्य दशदिग्विजयाय जाने यातैरितः कथयितुं हरितां महेन्द्रान् ॥१४॥

यस्याकब्बरपातिसाहेर्यात्रासु परजनपदजिघृक्षया प्रस्थानेषु चत्वारि चतुःसंख्याकान्य-ङ्गानि साधकानि गजवाजिरथपदातिलक्षणाः प्रकाराः स्कन्धा यस्यास्तादृश्याश्चम्वाः

सेनायाः प्रचारेण प्रकर्षेण चलनेन प्रोद्भूतानां प्रबलतयोत्थितानां धूलीनां भूमिरजसां पटलै राशिभिः परितः सर्वदिक्षु प्रसस्रे प्रसृत्तम् । तत्राहमेवं जाने वेद्मि । उत्प्रेक्ष्यते वा दशानां दशसंख्याकानाम् पूर्वाग्निदक्षिणानैर्ऋतपश्चिमावायूत्तरेशानाधोभुवनोर्ध्वलोकानां दिशां ककुभां विजयाय स्वायत्तीकरणार्थमस्य पातिसाहेः प्रस्थानं दिग्जैत्रयात्रां हरितां दशानामाशानां महेन्द्रान्पुरंदरान् । 'पति प्रतीच्या इति दिग्महेन्द्राः' इति नैषधे । इन्द्राग्नियमराक्षसवरुणपवनकुबेरेशाननागेन्द्रब्रह्माभिधान्दिक्पालान् प्रति कथयितुं निवेदयितुमितो भूमण्डलाद्यातैरुड्डीय यातैः गतैरिव ॥

### અવતરણ

હવે દિગ્‌વિજય કરવાની ઈચ્છાવાળા અકબરના પ્રયાણ સમયે શત્રુઓને જે ઉત્પાતો થયા તે બતાવતાં કહે છે.

### શ્લોકાર્થ

અકબરની દિગ્‌વિજય યાત્રાના પ્રયાણ સમયે ગજ–રથ–અશ્વ અને પાયદલરૂપી ચતુરંગી સેનાના ચાલવાથી ઉડેલી ધૂળથી સર્વ દિશાઓ વ્યાપ્ત બની ગઈ. બાદશાહના દિગ્‌વિજય પ્રયાણનો વૃત્તાંત દિશાઓના અધિપતિઓ (ઇન્દ્ર, અગ્નિ, યમ, રાક્ષસ, વરૂણ, પવન, કુબેર, ઈશાન, નાગેંદ્ર અને બ્રહ્મા)ને કહેવા માટે જાણે ભૂમિ પરથી ઉખડીને તે ધૂળ ગઈ ન હોય તેમ હું જાણું છું. ॥૧૪॥

यत्प्रस्थितौ रथहयद्विपपत्तिवीह्वा–प्रोत्खातपांसुपिहिताखिलदिङ्मुखेषु ।
आक्रन्दि चक्रमिथुनैरथ पांसुलाभिः प्राह्लादि पल्लवितमन्तरुलूकलोकैः ॥१५॥

यस्याकब्बरपातिसाहेः प्रस्थितौ दिग्जैत्रयात्रायां प्रयाणावसरे रथाः स्यन्दना हया वाजिनः द्विपा हस्तिनः पत्तयः पदातयः पादचारिणस्तेषां वीह्वाभिश्चङ्क्रमणैः बाहुल्यात्सर्वदिक्संचरणैः कृत्वा प्रोत्खातैरुत्थापितैः पांसुभिर्धूलीपटलीभिः पिहितान्यावृतानि आच्छादितानि । जनदशामगोचरीकृतानीत्यर्थः । अखिलानि समग्राणि दिशां हरितां मुखानि विभागास्तेषु सत्सु सजलजलदपटलसंचलितरजनीजनितान्धकारप्रचारभ्रान्तेश्चक्राणां चक्रवाकानां मिथुनैर्द्वन्द्वैराक्रन्दि परस्परवियोगाशङ्कया दुःखादाक्रन्दोऽक्रियत । मुक्तकण्ठं रुरुदे इत्यर्थः । अथ पुनः पांसुलाभिर्व्यभिचारिणीभिस्तरुणीभिः प्राह्लादि प्रमुमुदे । घनान्धकारसमये हि तासां स्वेच्छाविहरणोत्साहस्पृहा पूर्णा स्यात् । पुनरुलूकलोकैर्घूकप्रकरैरन्तश्चित्तमध्ये पल्लवितमुच्छ्वसितम् । निशि तेषां स्वैरसंचारत्वात् । 'आलोकतालीकमुलूकलोकः' इति नैषधे ॥

શ્લોકાર્થ

દિગ્‌વિજય યાત્રાના પ્રયાણ સમયે રથ-ગજ-અશ્વ અને-પાયદળ -આ ચતુરંગી સેનાનાં ચાલવાથી ફેલી રજવડે સમસ્ત દિશાઓના વિભાગો આચ્છાદિત થવાથી, અંધકારનાં કારણે વિયોગની શંકાથી ચક્રવાક યુગલે મુક્તકંઠે રૂદન કર્યું ! વ્યભિચારિણી સ્ત્રીઓ હર્ષિત બની ! અને ઘૂવડો ચિત્તમાં આનંદિત થયા ॥૧૫॥

बलवति भूमण्डलाखण्डले दिग्विजयाय प्रतिष्ठमाने सति भाविपराभवाः प्रतीपपृथ्वीपालाः भूकम्परजोवृष्टिदिग्दाहरविमण्डलच्छिद्रादिकानुत्पातान्पश्यन्तीति अत एवादौ त एव प्रोच्यन्ते

धत्ते स्म कम्पमभिषेणयति क्षितीन्द्रे यस्मिन्प्रतीपपृथिवीपुरुहूतपृथ्वी ।
यस्मादतः परमसौ भविता पतिर्मे प्रीतेर्हृदन्तरिति निर्मिततांण्डवेव ॥१६॥

यस्मिन्नकब्बरनाम्नि क्षितीन्द्रे वसुधावलयवासवे अभिषेणयति रिपुपार्थिवान्प्रति पताकिनीभिरभिगच्छति सति प्रतीपाः प्रतिभटा ये पृथिवीपुरुहूताः वसुमतीबिडौजसः तेषां पृथ्वी वसुंधरा कम्पं वेपथुं चञ्चलतां धत्ते स्म दधौ । भूः कम्पते स्मेत्यर्थः । उत्प्रेक्ष्यते इति हेतोर्हृदन्तः स्वमानसमध्ये प्रीतेः प्रमोदादिव । सम्यङ्निजचेतोभिप्रेतभर्तरि स्नेहाद्वा निर्मितं कृतं ताण्डवं नृत्य यया तादृशीव । इति किम् । यस्मात्कारणादतः परमद्यतनवासरादारभ्य असौ सकलराजचक्रचूडामणीरकैतनीतिमतामग्रणीरकब्बरक्षोणीनभोमणीर्मम भर्ता भावी भविष्यति ॥

અવતરણ

બલવાન પૃથ્વીપતિ સૂર્ય (અકબર બાદશાહનું) નું દિગ્‌વિજય માટેનું પ્રયાણ થતાં શત્રુરાજાઓ વડે ધરતીકંપ, રજોવૃષ્ટિ દિગ્દાહ, સચ્છિદ્ર સૂર્યમંડળ આદિ ભાવિ-પરાભવ સૂચક ઉત્પાતો જોવામા આવ્યા, તેનું વર્ણન કરતા પ્રારંભમા કહે છે :

શ્લોકાર્થ

પૃથ્વીપતિ ( અકબર ) નું શત્રુરાજાઓ તરફ પ્રયાણ થતાં શત્રુરાજાઓની પૃથ્વી કંપવા-ધ્રૂજવા લાગી ! ( શા માટે ? ) 'આજથી આરંભી સકલચક્રચૂડામણિ એવો આ બાદશાહ મારો ભાવિ-પતિ થશે !' હૃદયમાં આવો આનંદ થવાથી જાણે પૃથ્વી નૃત્ય કરી રહી ન હોય. !॥૧૬॥

संप्रस्थिते वसुमतीविजयाय यस्मि–न्भूपैर्विरोधिभिरदृश्यत दिक्षु दाहः ।
जाने निजव्यसनवीक्षणभूतनूता(त्ना)–सातस्वदिग्युवतिनिःश्वसिताग्निकीलः ॥१७॥

यस्मिन्नकब्बरनृपतौ वसुमत्या वसुंधराया विजयाय स्वायत्तीकरणार्थं संप्रस्थिते सम्यग्विजयविधायिमुहूर्तदिने चतुरङ्गचमूचक्रेण समं निर्मितप्रस्थाने सति । प्रचलिते सतीत्यर्थः । विरोधो विद्यते येषां ते विरोधिनस्तैर्विपक्षैर्भूपैः क्षोणीपालैर्दिक्षु सर्वाशासु दाहो ज्वलज्ज्वालादि ज्वालामालाकुलत्वमदृश्यत दृष्टः । सर्वा अपि हरितो ज्वलन्त्यो दृष्टा इत्यर्थः । तत्राहमेवं जाने विद्वांकरोमि उत्प्रेक्षे वा निजानामात्मीयानामर्थादकब्बरपरिपन्थिपूर्वादिदिक्पतिनृपतीनां व्यसनानां भाविमरणावधिविपत्तीनां वीक्षणेन दीर्घदर्शितया अवलोकनेन ज्ञानेन कृत्वा भूतमुत्पन्नं यन्नूत्नं नवीनमसातं दुःखं यासां तासां स्वेषां तत्तद्दिक्पतिनृपाणां दिशामेव युवतीनां प्रियाणां निःश्वसिताग्नेर्निःश्वासानिलस्य कीलो ज्वालेव । कीलशब्दोऽकारान्तोऽप्यस्ति । 'त्रिनेत्रनेत्रानलकीलनीलम्' इति नैषधे । तथा 'वल्लरशफरमयूरकीलहालाः' इति लिङ्गानुशासने पुंस्त्रीलिङ्गे कीलः कीला ॥

श्लोकार्थ

દિગ્વિજયના પ્રયાણ સમયે શત્રુરાજાઓએ દિશાઓમાં જ્વાલાઓ જોઈ. અકબર બાદશાહના પૂર્વ આદિ દિશાઓના અધિપતિ શત્રુરાજાઓની ભાવિ વિપત્તિને જોવાથી ઉત્પન્ન થએલા દુખવડે પોતાની દિગાંગનાઓનાં નિઃશ્વાસરૂપી અગ્નિની જ્વાલાઓ જાણે ન હોય તેમ હું માનું છું ! ॥૧૭॥

भूपेऽभिषेणयति यत्र रजोभिवृष्टया दृष्टा दिशः परनृपैर्मलिनाः समग्राः ।
स्वस्वामिसंकटसमीक्षणमूर्छनोर्वी–निष्पातधूसरितगात्रलता इवैताः ॥१८॥

यत्र यस्मिन्भूपे अकब्बरनृपे अभिषेणयति सति सेनाभिः सम प्रतिनृपतीनभिगच्छति सति परनृपैः प्रतिभटभूपालकलापै रजोभिवृष्टया अतिबहुलानां धूलीनामभि समन्ताद्वर्षणेन कृत्वा मलिनाः कश्मला मलीमसाः समग्राः समस्ता अपि दिश आशा दृष्टा । उत्प्रेक्ष्यते–एता दिशः स्वासामात्मीयानां स्वामिनां भर्तृणां संकटानां व्यसनानां समीक्षणेन सम्यङ्निश्चतत्वेनावलोकनेन कृत्वा मूर्छनैर्दुःखोद्भूतातुच्छमूर्छाभिरुर्व्यां भूमौ निष्पातो निष्पतनं लुण्ठनं वा तेन धूसरिता ईषत्पाण्डुरिता धूलीलुलिता वा रजोमया वा जाता गात्रलताः शरीरयष्टयो यासां तादृश्य इव ॥

### શ્લોકાર્થ

પૃથ્વી વિજય માટેના પ્રયાણ સમયે રજોવૃષ્ટિ થવાથી શત્રુરાજાઓએ સમસ્ત દિશાઓ મલિન-શ્યામ જોઈ, તે જાણે-પોતાનાં સ્વામીના ભાવિ સંકટને જોવાથી, દુઃખવડે મૂર્છિત થઈને ભૂમિપર આળોટવાથી ધૂળવાળા શરીરવાળી બની ગઈ ન હોય! ॥૧૮॥

यन्मेदिनीकुमुदिनीरमणप्रयाणे
छिद्रं न्यभालि परिपन्थिभिरभ्रपान्थे ।
मद्वंशजक्षितिरथोदयिनी हृदन्त-
र्दुःखप्रकर्षत इति स्फुटितोरसीव ॥१९॥

कुमुदिनीनां कैरविणीनां रमणो वरयिता कुमुदिनीरमण । मेदिन्या धरण्याः कुमुदिनीरमणः स चासौ कुमुदिनीरमणश्च । 'इदं तमुर्वीतलशीतलद्युति' इति नैषधे । तस्य प्रयाणे स्वरिपूपरि प्रस्थाने परिपन्थिभिः प्रत्यर्थिभिरर्थात् पृथिवीनाथैरभ्रपान्थे गगनपथिके भास्करे । 'हरि शुचीनौ गगनाद्ध्वजाध्वगौ' इति हैम्याम् । सूर्यमण्डले इत्यर्थः । छिद्रं विवरं न्यभालि ददृशे दृष्टम् । उत्प्रेक्ष्यते अथाकब्बरसाहेरागमनानन्तरं मद्वंशे मदीयान्ववाये जायन्ते स्म उत्पद्यन्ते स्मेति मद्वंशजाः सूर्यवंशीयास्तेषामेतावता सूर्यवंशोत्पन्नानां भूपालानां राजन्यवीराणां च क्षितिः क्षयो विनाश उदेष्यति भविष्यतीत्येवशीला उदयिनी भाविनी इति हेतोर्हृदन्तश्चित्तमध्ये दुःखस्य प्रकर्षतोऽतिशयतः स्फुटित द्विधाभूत सच्छिद्र वा जातमुरो हृदयं यस्य तादृश इव । 'पन्था भास्वति दृश्यते विलसय॰ प्रत्यर्थिभिः पार्थिवैः' इति नैषधे । म्रियमाणा रणे सूर्ये छिद्रं पश्यन्तीत्यरिष्टवेदिनः । यद्वा । द्वावेतौ पुरुषौ लोके सूर्यमण्डलभेदिनः । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥' इत्युक्तत्वात् । 'स सूर्ये छिद्र निरीक्षते' इति तु तद्वृत्तिः । ततो भानौ रन्ध्रनिभालनमिति ॥ इति प्रती॰ पनृपतीनामरिष्टाविर्भावना ॥

### શ્લોકાર્થ

પૃથ્વીરૂપી કુમુદિનીનાં પતિના (અકબર બાદશાહના) પ્રયાણ સમયે શત્રુરાજાઓએ આકાશમાં સૂર્યમંડલને સચ્છિદ્ર જોયું, તે જાણે 'આ બાદશાહના આગમનથી મારા વંશનો સૂર્યવંશનો ભાવિ ઉચ્છેદ થશે! આવા દુઃખનાં પ્રકર્ષથી જાણે હૃદય ફાટી ગયું ન હોય! અર્થાત્ સચ્છિદ્ર બની ગયું ન હોય! ॥૧૯॥

યસ્ય પ્રસૃત્વરયશઃશરભૂસવિત્રી
　　સ્વઃકૂલિનીવ કરવાલલતા બભૂવ ।
યસ્યાં નિમજ્જ્ય રિપુરાજપરમ્પરાભિ
　　ર્યેનાન્વભાવિ દિતિજદ્વિષતાં વિભૂતિઃ ॥૨૦॥

યસ્યાકબ્બરસાહેઃ કરવાલલતા ખડ્ગયષ્ટિઃ સ્વઃકૂલિની મન્દાકિનીવ બભૂવ જાતા । કિંભૂતા । પ્રસૃત્વરં વિશ્વવિસ્તરણશીલં યદ્યશઃ કીર્તિઃ તદેવ શરભૂઃ સ્વામિકાર્તિકસ્તસ્ય સવિત્રી જનની યેન કારણેન । યસ્યાં કરવાલલતાસ્વઃકૂલિન્યાં નિમજ્જ્ય બૂડિત્વા સ્નાત્વા તદભિમુખમાગત્ય પ્રહૃત્ય ચ પઞ્ચત્વમાસાદ્ય રિપવઃ શાત્રવો જનો યસ્તે રાજાનસ્તેષાં પરમ્પરાભિઃ શ્રેણીભિઃ દિતિજાનાં દિતેરસુરમાતુર્જાયન્તે સ્મેતિ દિતિજાસ્તેષાં દ્વિષતાં વૈરિણાં દેવાનાં વિભૂતિઃ સુરશ્રીરન્વભાવિ અનુભૂયતે સ્મ । ગઙ્ગાયાં રણે ચ ત્યક્તપ્રાણા દેવભૂયં ભજન્તીતિ પરમતમ્ । 'મૃતે ચાપિ સુરાઙ્ગનાઃ ઇત્યુક્તેઃ ॥

શ્લોકાર્થ

અકબર બાદશાહની તલવાર, વિશ્વવ્યાપી પ્રસારના સ્વભાવવાળી કીર્તિરૂપ કાર્તિકજનની આકાશગંગા જેવી બની, કે જે આકાશગંગાના પ્રવાહમાં શત્રુરાજાઓની હારમાળાઓ દેવોના વૈભવનો અનુભવ કરનારી બની ! ॥૨૦॥

યસ્મિન્રણાઙ્ગણગતે પ્રહતાહિતાશ્વાઃ
　　શૌર્યોદયાદ્દિવિ મુહુર્મુહુરુત્પતન્તિ ।
ભૂમૌ નિજાભિભવતઃ સવિતુઃ સગોત્રાં
　　સ્તાર્ક્ષ્યાનિવાશ્રયિતુમુત્સુકતાં વહન્તઃ ॥૨૧॥

યસ્મિન્નકબ્બરભૂપતૌ રણાઙ્ગણં સંગ્રામમધ્યં ગતે પ્રાપ્તે સતિ પ્રહતાઃ શસ્ત્રપ્રહારાદિના વ્યાપાદિતા યે અહિતાનાં પ્રતિપક્ષિણામશ્વાસ્તુરઙ્ગમાસ્તે શૌર્યોદયાત્ શૂરતાયાઃ પ્રાદુર્ભાવાન્મુહુર્મુહુ· વારં વારં દિવિ ગગને ઉત્પતન્તિ ઉચ્છલન્તિ ઉચ્ચૈઃ ફાલાં દદતે । ઉત્પ્રેક્ષ્યતે ભૂમૌ પૃથ્વીપીઠે નિજસ્યાત્મનોઽભિભવતઃ પરાભવનોદયાત્ સવિતુઃ સૂર્યસ્ય પિતુર્વા સગોત્રાન્ સ્વજનાન્બન્ધૂન્ તાર્ક્ષ્યાનશ્વાન્ આશ્રયિતું શરણીકર્તુમુત્સુકતામુત્કણ્ઠાં વહન્તો ધારયન્ત ઇતિ । વિપત્તૌ સ્વજનાઃ શ્રીયન્તે ઇતિ સ્થિતિઃ શ્રુતિર્વા ॥

શ્લોકાર્થ

અકબર સાથેના સંગ્રામમાં શસ્ત્રોના પ્રહારોથી હણાયેલા શત્રુઓના અશ્વો શૌર્યતાનો

આહુર્ભાવ થવાથી આકાશમાં વારંવાર ઉછળતા હતા અથવા ફાળ ભરતા હતા, તે જાણે પૃથ્વી ઉપર પોતાનો પરાભવ થવાથી, પોતાનાં સ્વજન-બંધુ એવા સૂર્યના અશ્વોનો આશ્રય કરવા માટે ઉત્કંઠિત થયા ન હોય ! ॥૨૧॥

एतत्कृपाणनिहताहितकुम्भिकुम्भ
निष्पातिमौक्तिकततिः समरे विरेजे ।
दृष्ट्वा हतान् पतिभूमिपतीन् स्वदीय-
श्रीणां क्षणप्रपतदश्रुकणावलीव ॥२२॥

एते अकब्बरसाहिना कृपाणेन निजचन्द्रहासयष्टिनो कृत्वा निहता व्यापादिता विदारिता ये अहितानां स्वप्रतिपक्षाणां कुम्भिनां भद्रजातिजातानां कुम्भाः शिरःपिण्डास्तेभ्यो निष्पतति निर्गलति निःसरतीत्येवंशीला निष्पातिनी मौक्तिकानां मुक्ताफलानां ततिर्मालिका समरे संग्रामाङ्गणे विरेजे राजते स्म निर्बभौ । उत्प्रेक्ष्यते स्वस्यात्मनः पतीन्नायकान् भूमिपतीन्धरणीरमणीन् हतानर्थादकब्बरेण स्वविरोधितया यमातिथीकृतान्दृष्ट्वा व्यालोक्य स्वीयलक्ष्मीणां प्रत्यर्थिपार्थिवसंबन्धिनीनां श्रीणाम् । राज्यलक्ष्मीणामित्यर्थः । ईक्षणेभ्यो विलोचनेभ्यः प्रपतन्ती प्रकर्षेणाविरलधारासारसम्बुधारायमाणधारं निःसरन्ती अश्रुकणानां बाष्पबिन्दूनामावलीव धोरणिरिव ॥

श्लोकार्थ

સમરાંગણમાં બાદશાહનાં ચંદ્રહાસ ખડ્ગથી વિદારણ કરાયેલા શત્રુરાજાઓના હાથીઓના કુંભસ્થલમાંથી નીકળી પડેલા મૌક્તિકો શોભે છે, તે જાણે પોતાના પતિ રાજાઓને મરણશરણ થયેલા (મરણ પામેલાં) જોઈને શત્રુરાજાઓની રાજ્યલક્ષ્મીની આંખમાંથી નીકળતી અશ્રુધારાનાં જલબિંદુઓની પંક્તિ ન હોય ! ॥૨૨॥

रोमाङ्कुराः समिति यस्य समुच्छ्वसन्ती संवाससंगतगुणप्रगुणीभवन्तः ।
एतद्दुरुद्धतविरोधिधराधवानां हल्लेखतामिव निशुम्भकृते वहन्तः ॥२३॥

यस्य हमाऊनन्दननृपस्य समिति संग्रामाङ्गणे रोम्णां तनूरुहाम् । लोम्नामित्यर्थः । 'रोमलोमतनूरुहाः' इति हैम्याम् । अङ्कुराः प्ररोहाः समुच्छ्वसन्ति उच्चैः संजायन्ते उल्लसन्ति । उत्प्रेक्ष्यते एतदकब्बरसाहिरिव उद्धता उत्कटा मदोन्मत्ता ये विरोधिधराधवाः प्रतिपार्थिवास्तेषां निशुम्भकृते दक्षिणारमणप्रदिशोङ्गणप्राघुणीकरणार्थं हल्लेखतामुत्कण्ठो-

प्रेकभावं वहन्तो विभ्राणा इव । अत एव किंलक्षणाः । संवासेनाकब्बरसाहिदेहे सम्यग्वसनेन सहस्थानेन वा कृत्वा संगता मिलिताः समागता वा ये गुणाः शौर्योत्साहसत्त्वादयस्ते प्रगुणीभवन्तः प्रगल्भा जायमानाः । 'यादृशैः सहवासः सङ्गतिस्तादृशा एवायान्ति गुणाः' इति लोकप्रसिद्धिः । यदुक्तं च 'जो जारिसेण संगं सो वि हु तारिसो होइ । कुसुमेहिं सह वसंता तिलावि तग्गं धिया हुंति ॥' इति सूत्रोक्तिः ॥

श्लोकार्थ

અકબરનાં શરીરના સહવાસથી આવેલા શૌર્યતા, સાત્ત્વિકતા, સાહસિકતા આદિ ગુણો, જાણે પ્રગટ થયા હોય, અથવા બાદશાહનાં ઉધ્ધત શત્રુઓને યમસદન પહોંચાડવા માટે જાણે ઉત્કંઠતા ધારણ કરાઈ હોય તેમ અકબર બાદશાહની રોમરાજી ઉલ્લસિત થઈ. ॥૨૩॥

एतद्दिनेशशशिभूदिनयामिनिभ्यां
सृष्टिं विधातुमखिलां विभुना न वैश्वीम् ।
तादृग्दिनेन्दुदयिताकृतये किमेत-
त्तेजोयशोरविविधू विधिना प्रणीतौ ॥२४॥

विधिना विश्वसृजा विधात्रा तादृश्योरतिमहत्योर्विगलितावधिसमयाभ्युदयभाजोर्दिनेन्दुदयितयोर्दिवसनिशयोः कृतये निर्माणाय । उत्प्रेक्ष्यते एतस्याकब्बरसाहेस्तेजः प्रतापः । 'निजस्य तेजः शिखिनः परःशताः' इति नैषधे । तथा 'एतस्योत्तरमद्य नः समजनि त्वत्तेजसां लङ्घने' इत्यपि नैषधे । 'त्वत्तेजसां भवत्प्रतापानाम्' इति तद्वृत्तिः तथा यशः श्लोकस्तावेव रविविधू सूर्याचन्द्रमसौ प्रणीताविव निर्मापिताविव । किंभूतेन विधिना । एताभ्यां प्रत्यक्षलक्ष्यं विद्यमानाभ्यां दिनरजन्योर्गमागमं कुर्वाणाभ्यां दिनस्य वासरस्य ईशः पतिः । यतः 'परविषयाक्रमणकलाकलाधरस्यैव विषयमायाति । रजनिपतिर्भजति दिनं दिवसपतिर्भजति नो रजनीम् ॥' इति सुभाषितोक्ते । दिननायको भास्करः शशी मृगाङ्कस्ताभ्यां सकाशादभूत्पत्तिर्ययोस्तादृश्यौ दिनयामिन्यौ वासरविभावर्यौ ताभ्यां कृत्वा अखिलां समस्तामपि समग्रामपि वैश्वीं जगत्संबन्धिनीं सृष्टिं सर्गं निर्माणं कर्तुं रचयितुं न विभुना तयोर्द्वयोः प्रत्येकं चतुर्यामत्वेनाल्पत्वान्न समर्थेन ॥

श्लोकार्थ

સૂર્ય અને ચંદ્રથી જેમની ઉત્પત્તિ છે તેવા દિવસ અને રાત્રિથી સમસ્ત જગતની સૃષ્ટિ રચના માટે બ્રહ્મા સમર્થ બન્યા નહિ, અર્થાત્ પ્રત્યેકનાં ચાર પ્રહર હોવાથી તે

મર્યાદિત જ હતા, તેથી એવા પ્રકારનાં સંપૂર્ણ રાત્રિદિવસ કરવા માટે બ્રહ્માએ આ અકબર બાદશાહનાં પ્રતાપ અને યશરૂપી નવીન સૂર્ય-ચંદ્ર જાણે બનાવ્યા ન હોય ! ॥૨૪॥

यद्वैरिराजकयशोगुणराशिरात्री-
　प्राणेशतारकगणेन कदाचनापि ।
द्वीपान्तरं परिचरत्यपि यत्प्रताप-
　प्रद्योतने न समवाप्युदयावकाशः ॥ २५ ॥

यस्याकब्बरपातिसाहेः प्रताप एव प्रद्योतनः सहस्रकिरणः तस्मिन् द्वीपान्तरमपरं द्वीपं द्वीपानामष्टादशत्वात् । 'नवद्वयद्वीपपृथग्जयश्रियाम्' इति नैषधे । तेष्वन्यतमं कंचिद्द्वीपं परिचरति भजति सति परद्वीपे गतवति अपि सति यद्वैरिराजकस्याकब्बररिपुभूपतिप्रकरस्य । राज्ञां समूहो राजकम् । 'स्याद्राजपुत्रक राजन्यकं राजकमाजकम्' इति हैम्याम् । यशः श्लोकस्तद्युक्ता गुणानां राशयः समूहास्त एव रात्रीप्राणेशश्चन्द्रमास्तथा तारकाज्योतींषि तेषां गणेन मण्डलेन कदाचनापि कस्मिन्नपि प्रस्तावे उदयस्योद्गमनस्य प्रकटीभावस्यावकाशः समयो वेला नेति नैषधे समवापि संप्राप्तः । जगत्स्वाभाव्यात्सूर्ये द्वीपान्तरं गते अस्तमिते चन्द्रे ग्रहनक्षत्रतारका उदयावकाशं लभन्ते, परमकब्बरप्रतापसहस्ररश्मेर्नायं प्रकारः । यतः अष्टादशस्वपि द्वीपेषु सर्वत्रैव सद्भावः, परमत्र नास्तीत्येवं न तस्मिन् सहस्रांशौ सति चन्द्रादिज्योतिषामुदयावकाशः कुतः स्यादिति ॥

### શ્લોકાર્થ

અકબર બાદશાહનો પ્રતાપરૂપી સૂર્ય અન્ય દ્વીપમાં જવા છતાં પણ શત્રુરાજાઓનાં સમૂહનાં યશરૂપ અને ગુણરાશિરૂપ ચંદ્ર, નક્ષત્ર, ગ્રહ આદિ જ્યોતિષચક્રને ઉદયનો અવકાશ ક્યારે પણ મળ્યો નહિ ! અર્થાત્ જગત સ્વભાવથી સૂર્ય જ્યારે બીજા દ્વીપમાં જાય અર્થાત્ અસ્ત થાય ત્યારે ચંદ્ર, ગ્રહ, નક્ષત્ર તારાઓનો આકાશમાં ઉદય થાય છે, પરંતુ અકબર બાદશાહનાં પ્રતાપરૂપી સૂર્યનું અઢારેદ્વીપમા અસ્તિત્વ હોવાથી. શત્રુરાજાઓના યશરૂપી ચંદ્ર, ગ્રહ નક્ષત્ર અને તારાઓને ઉદયનો અવકાશ ક્યાંથી પ્રાપ્ત થાય ! ॥૨૫॥

अश्रान्तदण्डनिहताहववादनीय-
　वाद्यस्वरैः प्रसमरैः समरे धरेन्दोः ।

अस्तम्भि वैरिनृपदोर्युगदण्डदर्पः
सर्पेन्द्रदर्प इव गारुडिकस्य मन्त्रैः ॥ २६ ॥

धरेन्द्रोर्वसुमतीवासवस्तेयीपतेः प्रसृमरैः सकलदिक्चक्रविस्तारणशीलैरश्रान्तमनवरतवाद्यवादकमानवैर्दण्डैर्वाद्यवादनयष्टिभिर्निहतानि ताडितानि तथा आहवे संग्रामाङ्गणेषु वादनीयानि वादयितुमुचितानि यानि वाद्यानि रणतूराणि अन्यवादित्राणि वा तेषां स्वरैर्निर्घोषैः कर्तृभिर्वैरिणोऽकब्बरसाहेरसहजा एव नृपाः पार्थिवास्तेषां दोर्युगदण्डानां भुजयामलकुद्दालानां आजान्वायतत्वेन दण्डाकारत्वाद्दण्डास्तेषाम् 'अथ वा बाहुकन्दानां सैन्यानां च चक्रगरुडादिव्यूहानां वा अश्वानां प्रतिनृपतियानरत्नतुरङ्गमाणां वा उपलक्षणादश्ववाराणां गजरथारोहिणां च । 'दण्डः सैन्ये दमे यमे ॥ मानव्यूहे ग्रहे भेदेऽश्वेऽर्कानुचरे मथि । प्रकाण्डे लगुडे कोणे चतुर्थोपायवर्गयोः ॥' इत्यनेकार्थः । दर्पोऽभिमानोऽस्तम्भि स्तम्भ्यते स्म निराकृतः । अधीकृताः सर्वेऽपीत्यर्थः । कैरिव । मन्त्रैरिव । गारुडं स्थावरजङ्गमविषनिवारणप्रवणमन्त्रतन्त्रादिशास्त्रमर्थ्यते वेत्ति वेति गारुडिकः तस्य मन्त्रैर्जाङ्गुलीप्रमुखैः सर्पेन्द्रस्य नागराजस्य दर्पो गर्वो विषवेगाहङ्कारः स्तम्भ्यते ॥

## શ્લોકાર્થ

સતત દંડથી વગાડવામા આવતા રણસંગ્રામનાં વાજીંત્રોનો પ્રસરતા ધ્વનિથી, રણસંગ્રામમાં અકબરના શત્રુરાજાઓનાં ભુજાબળનું અભિમાન સ્તંભિત થઈ ગયું. જેમ ગારુડીના મંત્રોથી નાગરાજનો અહંકાર ઓસરી જાય તેમ શત્રુરાજાઓનો અહંકાર ઓસરી ગયો ! ॥૨૬॥

यत्कीर्तिविद्विपदकीर्तिहतप्रतीपा-
सृक्पङ्क्तिजह्नुतरणिद्रुहिणाङ्गजाभिः ।
जन्यावनीयदवनीशशिनस्त्रिवेणी-
सङ्गः किमाविरभवत्त्रिदिवाभिकानाम् ॥२७॥

यस्यासावकब्बराभिधानस्यावनीशशिनो वसुधासुधांशोर्जन्यावनी संग्राममेदिनी । उत्प्रेक्ष्यते त्रिदिवाभिकानां सुरलोकाभिलाषुकाणाम् । 'कामुकः कमिता कम्रोऽनुकामनयिताभिकः' इति हैम्याम् । धीराणां तिसृणां वेणीनां तरङ्गिणीप्रवाहानां सङ्गो मिलनं गङ्गायमुनासरस्वतीसङ्ग इव आविरभवत प्रकटीबभूव । वर्णिकाभिः कृत्वा यस्य साहेः कीर्तिः प्रसरद्यशस्तथा विद्विषामकब्बरपातिसाहिपुरो रणे भग्नानां प्रत्यर्थिपार्थिवानामकीर्तिरपयशः । तथा च हता अकब्बरनरेन्द्रेणैव रणाङ्गणे व्यापादिता ये प्रतीपाः परिपन्थिपृथिवीनाथास्ते-

